अर्हम्

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

श्रीरत्नमन्दिरगणिनिर्मिता

# उपदेशतरङ्गिणी ।

वाराणस्यां

श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये

मुद्रिता प्रकाशिता च ।

वीर संवत् २४३७ ।

मूल्यम् ३) रूप्यकाः ।

# प्रस्तावना ।

—*—

अस्योपदेशतरङ्गिण्याख्यस्याऽन्वर्थं नाम संबिभ्रतो ग्रन्थस्य कर्तारः श्रीनन्दिरत्नगणिशिष्यप्रवराः पण्डितमण्डनाः श्रीरत्नमन्दिरगणयोऽभूवन् । यद्यप्येभिर्ग्रन्थकर्तृभिः स्वसत्तासमयो नात्रोपनिबद्धः, तथापि तैरेव विरचितस्य श्रीभोजप्रबन्धस्य प्रशस्तिं गतेन

"जातः श्रीगुरुसोमसुन्दरगुरुः श्रीमत्तपागच्छपस्तत्पादाम्बुजषट्पदो विजयते श्रीनन्दिरत्नो गणिः ।
तच्छिष्योऽस्ति च रत्नमन्दिरगणिर्भोजप्रबन्धो नवस्तेनाऽसौ मुनिभूमिभूतशशभृत्संवत्सरे निर्मितः" ॥

एतेन पद्येन विक्रमार्कात् षोडशशताब्यामेषां विद्यमानता स्फुटमवसीयते ।

ग्रन्थकर्तृभिश्चात्र ग्रन्थे दानादि–सप्तक्षेत्रवित्तवितरण–पूजापञ्चाशक–तीर्थयात्रा–धर्मोपदेशात्मकाः पञ्च तरङ्गा उपन्यस्ताः, येष्वतिसुगमाभिर्वचनरचनाभिः संक्षिप्तैरपि तत्तद्विषयपरिपोषकैरनेकैर्दृष्टान्तविन्यासैः, अनल्पैश्च पूर्वमहाकविसंसूक्तिनिवहैश्चित्ताकर्षकतयोपदेशपदानि व्यावर्णितानि; विषयानुक्रमण्या पद्यानुक्रमणिकया चैतत् स्वयं सहृदया अवभोत्स्यन्ते, इति नाऽत्रातिवक्तव्यमस्माकम् ।

एभिर्ग्रन्थकर्तृभिर्भोजप्रबन्धव्यतिरेकेणाऽन्ये कियन्तः किंविषयाश्च ग्रन्था ग्रथिताः ? इति नाद्यापि निश्चयपथमवतीर्णम् ।

उपदेशविषयेऽनन्यतमस्याऽत्युपकारिणश्चास्य ग्रन्थस्य नाद्यावधि मुद्रणं जातम्, अत्यावश्यकं च तद् विज्ञाय ग्रन्थोऽयमस्माभिः प्रसिद्धिं नीतः । अस्य ग्रन्थस्य च गूर्जरभाषायामनुवादं विदधता जामनगरनिवासिना पण्डितहीरालालेन तु बहुषु स्थलेषु विरुद्धार्थमेवानूदितम्, अनेकत्र गद्यार्थोऽपि न विहितः, अनल्पानि पद्यान्यपि परित्यक्तानि, किं बहुना ? यत्र न जातः स्वमतिप्रवेशः सर्वत्रापि तत्र पण्डितम्मन्यत्वेन किञ्चिदप्यनालोच्य, अपरिपृच्छ्य च बहुश्रुतान् पाठापलाप एव विहितः, एवं च 'अगस्य एवाऽयं विषयः स्वार्थैकपराणाम्' इति साधु सत्यापितम्, इति सुस्पष्टमेव भविष्यति ग्रन्थमेतं सुविचारं द्रष्टॄणां सज्जनानाम्

अस्य मुद्रणे यान्यादर्शपुस्तकान्युपयुक्तानि तानि, तदर्पयितॄणां महाशयानां धन्यवादपुरस्सरं नामानि च प्रकटीक्रियन्ते—

१ पुण्यपत्तनस्थराजकीयपुस्तकभाण्डागार(डॅकनकॉलेज) स्य ।

२ ,, यस्मिन्नन्तेऽयमुल्लेखः समुपलभ्यते—"संवत् १५१९ वर्षे चै० शु० २ दिनें ग्र० ३५००" ।

३ अत्रत्ययतिवर्यश्रीनेमिचन्द्रस्य; प्रान्तभागे "संवत् १६६६ वर्षे चैत्रमासे शुक्लपक्षे चतुर्थीतिथौ गुरुवासरे लिखितम्, महं० काह्नाजीसुतगोवर्धनेन, ग्रन्थमा० ३९१५" इत्युल्लेखसमुल्लसितम् ।

एवं च पुस्तकत्रयाधारेण महता प्रयासेन शोधितमुद्रिते पुस्तकेऽस्मिन् दृष्टिदोषेण यानि स्खलनानि जातानि स्वभावसुन्दराः सज्जनास्तानि कृपया विशोधयिष्यन्ति

इत्याशास्महे—

यशोविजयग्रन्थमालाव्यवस्थापकाः ।

# उपदेशतरङ्गिण्या विषयानुक्रमः ।

## प्रथमस्तरङ्गः ।

—०—

## द्वितीयस्तरङ्गः ।

—*—

| पृ. | पं. | विषयः। |
|---|---|---|

## तृतीयस्तरङ्गः।



—×०×—

## चतुर्थस्तरङ्गः।

अर्हम्
श्रीविजयधर्मसूरिभ्यो नमः ।
श्रीरत्नमन्दिरगणिविरचिता—

# उपदेशतरङ्गिणी ।

## प्रथमस्तरङ्गः ।

श्रीनाभेयः स वो देयादमेयाः परमा रमाः । यन्नामध्यानतः सर्वसिद्धयः स्युः स्वयंवराः ॥ १ ॥
स श्रीपार्श्वप्रभुर्भूयाद् भक्तानां भूरिभूतये । यस्य प्रभावप्राग्भारैः शेषोऽभूद् भोगिपुङ्गवः ॥ २ ॥
श्रीसोमसुन्दरयशःपूरपूरितभूतलम् । श्रीवर्द्धमानमानौमि शिवश्रीरत्नशेखरम् ॥ ३ ॥
भारती सा रतिं रातु सतां यस्याः प्रसादतः । जडोऽपि जगतीपूज्यो जायते वृद्धवादिवत् ॥ ४ ॥
जीयाच्चिरं सुधादेश्यदेशनारसपेशला । माननीया मुनीशानामुपदेशतरङ्गिणी ॥ ५ ॥

श्रीनन्दिरत्नशिष्येण रत्नमन्दिरसाधुना । धर्मोपदेशमधुना प्रीण्यन्ते प्राणिनोऽधुना ॥ ६ ॥

तद्यथा—

वसुधाभरणं पुरुषः पुरुषाभरणं प्रधानतरलक्ष्मीः । लक्ष्म्याभरणं दानं दानाभरणं सुपात्रं च ॥ १ ॥

मेदिनीमण्डनं पुरुषा एव प्रकीर्त्तिताः परमार्थतः पुराणचतुरनैरैः । यतो जगति ये ये भव्या भावास्ते सर्वे सत्पुरुषावतारसम्भवाः, यथा—पुरुषसिंहे श्रीतीर्थङ्करे विहरमाण इयं भूमिर्मणिसुवर्णरजतमयप्राकारत्रयचतुर्द्वारसमवसरणसुरकृतनवहेमकमलजानुदघ्नसुरभिपुष्पप्रकराऽशोकवृक्षसर्वकालषड्ऋतुवनस्पतीकुसुमफलसम्भारभूषिता, तथा मारिदुर्भिक्षडमरेतिवैररोगाद्युपप्लवरहिता सम्पनीपद्यते, तथा चक्रवर्त्तिवासुदेवादिशलाकापुरुषे राज्यं कुर्वति सति नानाविधनगरस्थापनामहाधवलगृहवनवापीकूपतटाकप्राकारपरिखादीर्घिकाप्रपामठप्रासादसुन्दरा चौरधाटीकुललुण्टाकपेटकाद्युत्कटदुष्टकष्टपरम्पराविरहिता महीमनोहरा च स्यात् । तथाच——

मठप्रासादसुन्दरा चौरधाटीकुललुण्टाकपेटकाद्युत्कटदुष्टकष्टपरम्पराविरहिता महीमनोहरा च स्यात् ।

इत्तो पवरं तित्थं पुरिसं पभणन्ति सव्वन्नू ॥२॥

पुरिसेहिं रइअतित्थं नहु पुरिसा हुन्ति तित्थरइआ वि । सलिलाउ हवइ धन्नं नो नीरं होइ धन्नाउ ॥३॥

पुरिसाउ होइ तित्थं न हुन्ति तित्थाउ तिहुअणे पुरिसा ।

एवं तीर्थान्यपि पुरुषप्रवर्त्तितान्येव, यतः श्रीशत्रुञ्जयतीर्थस्याऽतीतानागतवर्त्तमानानेकसिद्धानां

सिद्धपदप्राप्त्या श्रीसिद्धक्षेत्रतीर्थमिति प्रसिद्धिर्जाता । यतः—

उस्सप्पिणीइ पढमं सिद्धो इह पढमचक्किपढमसुओ । पढमजिणस्स य पढमो गणहारी जत्थ पुण्डरीओ ॥४॥
चित्तस्स पुन्निमाए समणाणं पञ्चकोडिपरिवरिओ । निम्मलजसपुण्डरिअं जयउ तयं पुण्डरीअतित्थं ॥ ५ ॥

अत एव साम्प्रतमपि श्रीशत्रुञ्जयसोपारकवृद्धनगरादिषु नानास्थानागतैः श्रीसङ्घैश्चैत्रपूर्णिमायाम्—

दसवीसतीसचत्तापन्नासापुप्फदामदाणेणं । लहइ चउत्थच्छट्ठट्ठमदसमदुवालसफलाइं ॥ ६ ॥

इत्यादिसिद्धान्तोक्तविधिना पूजाध्वजप्रदानघृतधारापूर्वकप्रदक्षिणापुण्डरीकोद्यापनादिमहोत्सवा वि-धीयन्ते । किंच--

यदधः समवासार्षीद्देवो नाभिनरेन्द्रसूः । तेनाऽसौ वन्द्यतां प्राप्तो राजादनमहीरुहः ॥ ७ ॥

एकोनसप्ततिः कोटाकोटयः पञ्चाशीतिः कोटिलक्षाश्चतुश्चत्वारिंशत्कोटिसहस्राः एतावद्वारान् श्रीयुगादिदेवः समवासार्षीत् श्रीशत्रुञ्जये इति सारावलीप्रकीर्णके प्रोक्तमस्ति । यथा——नवनवइपुव्वाइं उसहो सित्तुञ्जए समोसरिओ इत्यादि ।

वासासु चउम्मासं जत्थ ठिआ अजिअसन्तिजिणनाहा । बियसोलधम्मचक्की जयउ तयं पुण्डरिअतित्थं ॥८॥

तथा रैवततीर्थमपि अनन्ततीर्थङ्करकल्याणकत्रयभवनेन प्रसिद्धिं प्राप्तम् । यदुक्तम्—

दीक्षाकेवलनिर्वृतिकल्याणत्रिकमनन्ततीर्थकृताम् । युगपदथैकमभवत् स जयति गिरिनारगिरिराजः ॥ ९ ॥

श्रीनेमीश्वरत्रिकल्याणोत्पत्तिस्थानश्रीकृष्णकारितकल्याणत्रयप्रासादादिनानावदातराजीमतीशाम्बप्रद्युम्नासिद्धिस्नात्रजलगलनोत्पन्नलेप्यमयपूर्वप्रतिमाभङ्गखिन्नरत्नसुश्रावकाराधिताऽम्बिकाप्रदत्तश्रीब्रह्मेन्द्रनिर्मितवज्रमयश्रीनेमिनाथमूर्त्तिसंस्थापनाद्यनेकविदितावदातकारकपूर्वप्रधानपुरुषेभ्यः प्रभावप्रसिद्धिसमृद्धिसुन्दरं सर्वदर्शनपूज्यमासीज्जगति । यतः—

सारं सिद्धगिरेर्यदेव विदितं यन्नेमिनः स्वामिनः कन्दर्पद्विपदर्पमर्दनहरेर्वीरावदातास्पदम् ।
यन्निःसंख्यमहर्षिकेवलरमासंयोगसङ्केतभूस्तीर्थं श्रीगिरिनारनाम तदिदं दिष्ट्या नमस्कुर्महे ॥ १० ॥

तथाऽर्बुदाचलतीर्थं भरतेश्वरनिर्मापितश्रीयुगादिप्रासादबिम्बश्रीनागेन्द्राद्याचार्यप्रतिष्ठितप्रौढदादाभिधश्रीआदीश्वरप्रतिमास्थापनाश्रीविमलवस्तुपालादिकारापितश्रीयुगादिनेमीश्वरप्रासादादिपुण्यकरणीयपरम्परातः पृथ्वीप्रतीतमभूत् । यतः—

नागेन्द्रचन्द्रनिर्वृतिविद्याधरप्रमुखसकलसङ्घेन । अर्बुदकृतप्रतिष्ठो युगादिजिनपुङ्गवो जयति ॥ ११ ॥

तथा नागह्रदनवखण्डपार्श्वनाथतीर्थमपि चित्रकूटाधिपश्रीचित्राङ्गदनृपेणाघाटपुरपत्तनप्रेक्षणार्थागतेन विद्रुमसुक्ताफलस्वस्तिकसमलङ्कृतान्तरालनागनामह्रदमध्ये श्रीपार्श्वनाथप्रतिमाऽस्तीति निशालब्धस्वप्नानुसारेण प्रातस्ततस्तां समाकृष्य नागह्रदनगरे प्रौढप्रासादं निर्माप्याऽस्थापि। तदनु तत्रैकदा तद्वंश्यसोमनृपे राज्यं कुर्वति योगिनीपुरतः शहाबुद्दीनसुरत्राणसैन्यं समागतम्। ततस्तेन पार्श्वप्रतिमां पूजयित्वा संग्रामाङ्गणमागतेन सकलमपि यवनसैन्यं प्रतिमाधिष्ठायकाधिष्ठितशरीरेण निर्घाटितम्। परं स्वशरीरे नव खड्गघाता लग्नाः, ततः पश्चादागतः स्वमक्षताङ्गं मूर्त्तिं च नवशकलां ददर्श। तत उपवासत्रयाराधितदेवदत्तस्वप्नानुसारेण नव शकलानि संयोज्य प्रतिमां सज्जामकारयत्। तदनु महामहिमगेहं सर्वोपद्रवहरं नवखण्डश्रीपार्श्वतीर्थं जातम्। तथाष्टापदतीर्थं श्रीभरतचक्रवर्त्तिप्रवर्तितम्। यथा——

अष्टापदाद्रिशिखरे निजनिजसंस्थानमानवर्णधराः। भरतेश्वरनृपरचिताः सद्रत्नमया जयन्ति जिनाः ॥ १२ ॥

तथा सेरीसकतीर्थे देवचन्द्रक्षुल्लकेनाराधितचक्रेश्वरीदत्तसर्वकार्यसिद्धिवरणत्रिभूमिमयगुरुचतुर्विंशतिकायोत्सर्गिश्रीपार्श्वादिप्रतिमासुन्दरः प्रासाद एकरात्रिमध्ये कृतः। तत्तीर्थं कलिकालेऽपि निस्तुलप्रभावं दृश्यते। तारणदुर्गतीर्थे श्रीकुमारपालभूपालकारितगुरुतरश्रीअजितनाथप्रासादतः सकललोकलोचनानन्दकन्दकन्दलन-

नवाम्बुदमस्ति । तथा सीतामहासतीविहितगोमयमयश्रीसुपार्श्वबिम्बं तच्छीलमाहात्म्यवज्रीभूतं महातीर्थमद्यापि मण्डपाचलमण्डनोद्दण्डविहारहारं विराजते । किं बहुना, श्रीजीरापल्लिफलवर्द्धिकलिकुण्डकुर्कुटेश्वरपावकाऽऽरासणसङ्खेश्वरचारूपरावणपार्श्ववीणादीश्वरचित्रकूटाऽऽघाटश्रीपुरस्तम्भनपार्श्वराणपुरचतुर्मुखविहाराद्यनेकतीर्थानि यानि जगतीतले वर्त्तमानानि, यानि चाऽतीतानागतानि, तानि सर्वाण्यपि तत्तत्कालप्रधानचतुरनरशिरोरत्नपुरुषपुरन्दरप्रवर्त्तितान्येव, न तु स्वयं समुत्पन्नानि । परं क्वापि तत्तीर्थं न श्रूयते न दृश्यते, यस्मात् पुरुषाः सम्पनीपद्यन्ते, अत एव वसुधाभरणं पुरुष एव । यदुक्तम्—

हस्ती भाति मदेन कं जलरुहैः पूर्णेन्दुना शर्वरी वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः ।
शीलेन प्रमदा जवेन तुरगो नित्योत्सवैर्मन्दिरं सत्पुत्रेण कुलं नृपेण नगरं लोकत्रयं धार्मिकैः ॥ १३ ॥

अपिच—

क्षीराब्धावमृतं धने वितरणं वाणीविलासे ऋतं देहेऽन्योपकृतिः फलं वरतरौ वंशे च मुक्ताफलम् ।
मृत्स्नायां कनकं सुमे परिमलः पङ्के पयोजं यथा संसारे पुरुषायुषं निगदितं सारं तथा कोविदैः ॥ १४ ॥

गत्वाऽघहत्या श्रुतसंयमाभ्यां सद्दानसद्ध्यानतपस्क्रियाभिः ।

अर्हत्पदज्ञानशिवर्द्धिभिश्च मानुष्यकं जन्म वरं सुरेभ्यः ॥ १५ ॥

तेषां पुरुषाणामाभरणं कमलैव, न तु रूपकलादिगुणाः । यदुक्तम्—

जाइविज्जारूवं तिन्नि वि निवडंतु कन्दरे विवरे । अत्थुच्चिअ परिवड्ढउ जेण गुणा पायडा हुन्ति ॥१६॥

यतः—अकुलीनोऽपि उत्तमकुलीन उभयकुलविशुद्ध एकोत्तरशतकुलोद्द्योतकारक उभयपक्षनिर्मलराजहंसावतारइति, निष्कलोऽपि षष्टिकाष्टपत्रीटिप्पनकः, तृतीयात्रयोदश्यादिविभेदमजानन्नपि भलीं कुण्डलायमानपन्नगस्थाने गणयन्नपि लक्ष्मीवान् लोकोक्तकूर्चालसरस्वतीचतुर्दशविद्यानिधानप्रज्ञाबृहस्पतिप्रमुखबिरुदधारी भवति । तथा कुरूपोऽपि सुरूपः यथा—रूपरेखामकरध्वजकृष्णत्वे कृष्णावतारः, अनुच्चशरीरत्वे वामनवासुदेवावतारः, उच्चत्वे आजानुबाहुः, गौरवर्णः लम्बकर्णश्चम्पकच्छोटसमानः, मितभाषकत्वे कपूरचूर्णं क्षरति मुखकमले, बहुभाषणे वाग्मी चतुरचाणाक्यचकोरः, अल्पाहारे देवांशशुकाहारः, बह्वाहारे परिपूर्णं पूर्वभवे दत्त्वाऽऽगतः स्वेच्छया पूर्णं भुङ्क्ते, आलस्ये सामहणीसुरत्राणः, चापल्ये उद्यमी साहसिकसीमा एकाङ्गवरवीरः, खञ्जत्वे लीलामदकलकलभगतिगामी, अदायकत्वे प्रच्छन्नदाता गुप्तचिन्तामणिः, पात्रापात्रविचारविकलत्वे उदारचरितआषाढमासजलधरवदुच्चनीचस्थानकवितरणशीलः; इत्याद्यनेकदूषणगणा अपि लक्ष्मीलीलावतीसमालिङ्गित-

पुरुषस्य जनैर्गुणरूपतया प्रतिपद्यन्ते । तदुक्तम्—

विगुणमविगुणड्ढं रूवहीणं च रम्मं जडमवि मइमन्तं मंदसत्तं पि सूरं ।
अकुलमविकुलीणं तं पयंपन्ति लोआ नवकमलदलच्छी जं पलोएइ लच्छी ॥१७॥

वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धस्य द्वारे तिष्ठन्ति किङ्कराः ॥ १८ ॥
वन्द्यते यदवन्द्योऽपि यदपूज्योऽपि पूज्यते । गम्यते यदगम्योऽपि स प्रभावो धनस्य तु ॥ १९ ॥

यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥२०॥

आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौग्ध्यं भवेदार्जवम् ।
पात्रापात्रविचारसारविरहो यच्छत्युदारात्मतां मातर्लक्ष्मि ! तव प्रसादवशतो दोषा अपि स्युर्गुणाः ॥ २१ ॥

बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते ।
न च्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला कला ॥२२॥

किं बहुना ?, सर्वप्रकारैः पुरुषाणामाभरणं लक्ष्मीरेव, साऽपि प्रधानतरा न्यायोपात्ता, न चान्यायार्जिता ।

तदुक्तम्--

अन्यायसम्भवाश्रीरन्यायेनैव याति सा नियतम् । अर्जनहानिक्लेशः केवलमवशिष्यते कुधियाम् ॥ २३ ॥

अन्यायोपार्जितं वित्तं दश वर्षाणि तिष्ठति । प्राप्ते तु षोडशे वर्षे समूलं च विनश्यति ॥ २४ ॥

किञ्च--कमलाविकलनराणां कुलशीललावण्यरूपविद्यादयोऽपि गुणा दूषणतां भजन्ति ।

यदुक्तम्-

साकारोऽपि सविद्योऽपि निर्द्रव्यः क्वापि नार्थ्यते । व्यक्ताक्षरः सुवृत्तोऽपि द्रम्मः कूटो विवर्ज्यते ॥ २५ ॥

वरं रेणुर्वरं भस्म नष्टश्रीर्न पुनर्नरः । मुक्त्वैनं दृश्यते पूजा क्वापि पर्वणि पूर्वयोः ॥ २६ ॥

निर्धनो यद्युच्चस्तदा सति स्तम्भः, यदि खर्वस्तदा वामनः, यदि गौरस्तदाऽऽमवाती, यदि कृष्णस्तदा वनेचरभिल्लः, अल्पाहारस्तदा मन्दः, बह्वाहारस्तदा क्षारकृत् उदरे शनैश्चरो लग्नः, यद्याडम्बरी तदा विटः, यदि विनयी तदा भिक्षाचरो याचकः, यदि मितभाषी तदा मूको मूर्खश्च, यदि वाग्मी वातुलः, बहुभाषी भषलः प्रलापी, यदि क्षमी तदा भीरू रङ्कश्च, यदि शूरस्तदा धाटीवाहकः । किं बहुना ?, निर्धनः कुत्रापि न पूजनीयः । अत एव पुरुषाभरणं प्रधानतरलक्ष्मीः । लक्ष्म्याभरणं दानमेव ।

काव्येनेव कविर्धियेव सचिवो न्यायेन भूमीधवः शौर्येणेव भटो ह्रियेव कुलजः सत्येव गोत्रस्थितिः ।
शीलेनेव तपस्विवेषेव सविता विद्येव चाध्यात्मवान् वेगेनेव हयो दृशेव वदनं दानेन लक्ष्मीस्तथा ॥२७॥

दानेन विना लक्ष्मीविनाशोऽपि श्रूयते । यथा—

श्रीवृद्धिर्नखवच्छेद्या न धार्यैव कदाचन । प्रमादात् स्खलिते क्वापि समूलाऽपि विनश्यति ॥२८॥

दानाद्प्येकवर्गस्थौ प्रवर्त्तकनिवर्त्तकौ । एकः स्ववर्गमध्यस्थः परः पर्यन्तभूरभूत् ॥२९॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥३०॥

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥३१॥

दातव्यं भोक्तव्यं सति विभवे सञ्चयो न कर्त्तव्यः । पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ॥ ३२ ॥

यथा—

देयं भोज ! धनं धनं सुकृतिना ना सञ्चितव्यं कदा श्रीकर्णस्य बलेश्च विक्रमनृपस्याद्यापि कीर्त्तिर्यतः।
अस्माकं मधु दानभोगरहितं कष्टं चिरात् संचितं तेनेयं निजपाणिपादरसना घर्षत्यहो ! मक्षिका ॥ ३३ ॥

इत्यादि सर्वप्रकारैर्विचार्यमाणं लक्ष्म्याः शोभाकरं दानमेव । यतः—

सारं तदेव सारं नियोज्यते यज्जिनेन्द्रभवनादौ । अपरं पुनरपरधनं पृथ्वीमलखण्डपिण्डं वा ॥ ३४ ॥

दानालङ्काराभावे लक्ष्मीः पाषाणमलरूपैव। यथा-पाटलीपुरे नवनन्दनरेन्द्राणां कृपणतयाऽऽदीयमानानिज-पातकमात्राणां लोककरपीडनोपार्जितनवकनकपर्वता अप्यभाग्ययोगात् पाषाणमयाः संजाताः। ते च संप्रत्यपि पाटलीपुरे गङ्गातीरे पीतोपलमया दृश्यन्ते । तथा रङ्कश्रेष्ठिनः परिपूर्णकमला पाताले लीना । राजगृहे श्रेष्ठिमम्मणस्यापि मणिमयबलीवर्दात्मिका लक्ष्मीर्दानाद्यभावाद् मुधैव महीतले विनाशं प्राप्ता। तथा श्रेष्ठिसंकुलस्यापि कल्ये भोजनं दास्याम्येवं षण्मासविप्रतारितकपिलबटुना उपवासत्रयाराधितकालिकादेवीदत्तरूपपरावर्त्तविद्याबलात् संकुलरूपमङ्गीकृत्य सकललक्ष्मीर्विलसिता । पश्चान्निजरूपं प्रकटीकृत्य तेन तस्येदमुपदिष्टम् । यथा——

दातव्यं भोक्तव्यं सति विभवे संचयो न कर्त्तव्यः । यदि संचयं करिष्यसि संकुल! पुनरागमिष्यामि ॥३५॥

किं बहुना ?, लक्ष्म्याभरणं केवलं दानमेव, न तु भोगादिसामग्री । यतः—

आरोहन्ति सुखासनान्यपटवो नागान् हयांस्तज्जुषस्ताम्बूलाद्युपभुञ्जते नटविटाः खादन्ति हस्त्यादयः ।
प्रासादे चटकादयोऽपि निवसन्त्येते न पात्रं स्तुतेः स स्तुत्यो भुवने प्रयच्छति कृती लोकाय यः कामितम् ॥३६॥

यद्यपि दानं दत्तं क्वापि निष्फलं न भवति । यतः——

पात्रे धर्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं मित्रे प्रीतिविवर्द्धकं रिपुजने वैरापहारक्षमम् ।
भृत्ये भक्तिभरावहं नरपतौ सम्मानपूजाप्रदं भट्टादौ च यशस्करं वितरणं न क्वाप्यहो! निष्फलम् ॥ ३७ ॥

तदपि दानाभरणं सुपात्रसंयोग एव, सुपात्रे यद्दत्तं तदेव श्रेयःशान्तिकरम् । यदुक्तं नैषधकाव्ये——

पूर्वपुण्यविभवव्ययबद्धाः सम्पदो विपद एव विमृष्टाः । पात्रपाणिकमलार्पणमासां तासु शान्तिकविधिर्विधिदृष्टः॥३८॥

पात्रे स्तोकमपि दत्तं बहुफलं भवति । यतः——

जले तैलं खले गुह्यं पात्रे दानं मनागपि । प्राज्ञे शास्त्रं सतां प्रीतिर्विस्तारं यात्यनेकधा ॥ ३९ ॥

व्याजे स्याद् द्विगुणं वित्तं व्यवसाये चतुर्गुणम् । क्षेत्रे शतगुणं प्रोक्तं पात्रेऽनन्तगुणं पुनः ॥ ४० ॥

पात्रे दत्तं बहुफलम्, कुपात्रे दत्तं तु विपरीतमेव दृश्यते । केनचिदुक्तम्— पात्रापात्रविचारं कृपण एव करोति, न पुनरुदारः । यतः-

पत्त परिक्खह किं करह दिज्जइ मग्गंताइं । किं वरिसन्तो अम्बुहर जोइ समविसमाइं ॥ ४१ ॥

तदुत्तरम्—वरिसउ वरिसउ अम्बुहर वरसीडां फल जोइ । धत्तूरइ विस इक्खुरस एवड अन्तर होइ ॥ ४२ ॥

ससाईतं पि जलं पत्तविसेसेण अन्तरं गुरुअं । अहिमुहपडिअं गरलं सिप्पउडे मुत्तिअं होइ ॥ ४३ ॥

किञ्च—

आम्रे निम्बे सुतीर्थे कचवरनिचये शुक्तिमध्येऽहिवक्त्रे औषध्यादौ विषद्रौ गुरुसरसि गिरौ पाण्डुभूकृष्णभूम्योः ।
इक्षुक्षेत्रे कषायद्रुमवनगहने मेघमुक्तं यथाम्भस्तद्वत् पात्रे कुपात्रे नयजनिजधनं दत्तमायाति पाकम् ॥ ४४ ॥

पात्रमपि तदेव भव्यं यन्नामानुरूपपरिणामम्, नान्यत् । यदुक्तम्—

भौमे मङ्गलनाम विष्टिविषये भद्रा कणानां क्षये वृद्धिः शीतलिकेति तीव्रपिटके राजा रजःपर्वणि ।
मिष्टत्वं लवणे विषे च मधुरं रैकण्टिकाद्यं यथा पात्रत्वं च पणाङ्गनासु रुचिरं नाम्ना तथा नार्थतः ॥ ४५ ॥

पात्रं तदुच्यते यत्तरणतारणप्रवणम् । यथा—मज्जनशीलं ताम्रं पात्रीभूतं स्वयं तरति, तारयति च स्वाश्रितवस्तुजातम् । पात्रपरीक्षायामप्येवं प्रोक्तमस्ति, यथा—युधिष्ठिरभीमसंवादे हस्तिनागपुरे युधिष्ठिरनृपे सदसि सिंहासनोपविष्टे द्वारस्थभीमेनागत्य विज्ञप्तम्—

मूर्खस्तपस्वी राजेन्द्र ! विद्वांश्च वृषलीपतिः । उभौ तौ तिष्ठतो द्वारे कस्य दानं प्रदीयते ? ॥४६॥

युधिष्ठिर उवाच—सुखासेव्यं तपो भीम ! विद्या कष्टदुराचरी । विद्वांसं पूजयिष्यामि तपोभिः किं प्रयोजनम् ? ॥४७॥

भीमेनोक्तम्—श्वानचर्मगता गङ्गा क्षीरं मद्यघटस्थितम् । कुपात्रे पतिता विद्या किं करोति युधिष्ठिर ! ? ॥४८॥

कृष्णद्वैपायनेनोक्तम्—न विद्यया केवलया तपसाऽपि च पात्रता। यत्र विद्याचरित्रे च तद्धि पात्रं प्रचक्षते ॥४९॥

अत एव पात्रे धनवितरणं श्रेयस्करम् । यदुक्तम्—

सा लक्ष्मीर्या धर्मकर्मोपयुक्ता सा लक्ष्मीर्या बन्धुवर्गोपभोग्या ।
सा लक्ष्मीर्या स्वाङ्गभोगप्रसङ्गा याऽन्या मान्या सा तु लक्ष्मीरलक्ष्मीः ॥ ५० ॥

पात्रे न्यायार्जितं क्षेत्रकालभावैरदूषितम् । देयं धर्मार्थिना दानं विना कीर्त्त्यादिकारणम् ॥ ५१ ॥

प्रायो दानं सकारणं भवति । यतः—

दयसङ्गहभयकारणियलज्जागारवअधम्मधम्मे य । काहिइ कयमणेण दाणमेयं भवे दसहा ॥ ५२ ॥

सरोगभिक्षाचरादीनाम्, सहायादीनाम्, दुर्ज्जनानाम्, पुत्रादिवियोगे, लोकलज्जया, भट्टचारणादीनाम्, हिंस्राणाम्, साध्वादिसकलसङ्घस्य, प्रत्युपकारवाञ्छया, प्रागनेन बहूपकृतम्, इति दानं दशप्रकारम् । तत्र च त्रयमैहलौकिकम् । यतः—

भयं लोभस्तथा स्नेहस्त्रयो दानस्य हेतवः । ये दातारस्त्रयं मुक्त्वा धन्यास्ते मुक्तिगामिनः ॥ ५३ ॥

किं बहुना ? दानाभरणं सुपात्रम् । यतः—

उत्तमफलं सुपात्रे दानं विभवस्य मध्यमं भोगः। अधमं व्यसनव्ययगतिरधमाधममवनिविन्यासः ॥५४॥

अपि च—अधः क्षिपन्ति कृपणा वित्तं तत्र यियासवः। सन्तस्तु गुरुचैत्यादौ यदुच्चैःपदकाङ्क्षिणः ॥५५॥

अतः कारणाद् भो भव्याः! भाग्यवद्भिर्भवद्भिः सुपात्रदानधर्मविधौ सर्वदाऽप्युद्यमः कार्यः ॥

इति श्रीसुपात्रदानोपदेशः ॥



## अथ दानफलोपदेशमाह—

अभयं सुपत्तदाणं अणुकम्पाउचिअकित्तिदाणं च। दोहि वि मुक्खो भणिओ तिन्नि वि भोगाइयं दिन्ति ॥१॥

इह जगति दानं पञ्चविधं प्रसिद्धम्, तत्र प्रथममभयदानं वधबन्धादिभयभीतानां जन्तूनां प्राणत्राणादिना निर्भयकरणमभयदानम्। यदुक्तम्—

जीवानां रक्षणं श्रेष्ठं जीवा जीवितकाङ्क्षिणः। तस्मात् समस्तदानेभ्योऽभयदानं प्रशस्यते ॥ २ ॥

यो दद्यात् काञ्चनं मेरुं कृत्स्नां चैव वसुन्धराम्। एकस्य जीवितं दद्याद् न च तुल्यं युधिष्ठिर! ॥३॥

अहिंसा सर्वजीवानां सर्वज्ञैः परिभाषितम्। इदं हि मूलं धर्मस्य शेषस्तस्यैव विस्तरः ॥ ४ ॥

अभयं सर्वसत्त्वेभ्यो यो ददाति दयापरः । तस्य देहाद् विमुक्तस्य भयं नास्ति कुतश्चन ॥ ५ ॥

इह लोकेऽभयदानात् श्रेयः दयालुः कृपापारावार इत्यादिकीर्त्तिः, परलोके तु राज्यऋद्धिभोगपरिवारादि फलं भवति । यदुक्तम्--

दीर्घमायुः परं रूपमारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्वं, किमन्यत्, कामदैव सा ॥ ६ ॥

ये तु हिंसां धर्मबुद्ध्या कुर्वन्ति तेषां न श्रेयः, न सुकृतम् । यतः--

हिंसा विघ्नाय जायेत विघ्नशान्त्यै कृताऽपि हि । कुलाचारधियाऽप्येषा कृता कुलविनाशिनी ॥ ७ ॥

यदि ग्रावा तोये तरति तरणिर्यद्युदयति प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि ।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः प्रसूते सत्त्वानां तदपि न वधः क्वापि सुकृतम् ॥ ८ ॥

सकमलवनमग्नेर्वासरं भास्वदस्तादमृतमुरगवक्त्रात् साधुवादं विवादात् ।
रुगपगममजीर्णाज्जीवितं कालकूटादभिलषति वधाद् यः प्राणिनां धर्ममिच्छेत्॥ ९ ॥

भूयांसोऽपि भव्या अभयदानधर्माराधनतः शिवपुरं प्रापुः । यथा--

स श्रीशान्तिजिनः शान्तिं संश्रितानां तनोतु वः । येन श्येनाय दत्त्वा स्वं पलं त्रातः कपोतकः ॥१०॥

किमु देयमदेयं वा कृपाभरवतां सताम् ?। यथा मेघरथः प्राणान् ददौ त्राणाय पक्षिणः ॥ ११ ॥

श्रीशान्तिनाथेन पूर्वभवे मेघरथाभिधानेन पारापतरक्षणाय श्येनसन्तोषाय स्वमांसं दत्त्वा त्रैलोक्येऽपि करुणासागरत्वं लेभे । तथा—

सुमेरुहस्ती शशकाऽभयदानप्रभावतः । श्रेणिकस्य सुतो जज्ञे मेघाख्यो मगधेशितुः ॥ १२ ॥

विन्ध्याचलाटव्यां सुमेरुः करी सप्तशतहस्तिनीपतिः दवं दृष्ट्वा संजातजातिस्मरणो दृष्टदवदग्धपूर्वभवव्यथोत्पन्नभीतिः वर्षाकाले सर्वतृणलतावृक्षोन्मूलनेन योजनस्थण्डिलं चकार। तत्रैकदा दवो लग्नः। करी सपरिवारस्तत्र स्थितः। मृगादयोऽप्यरण्यजा जीवाः समागताः। करिणा पादः कण्डूयनार्थमुत्पाटितः। तदैकः शशकः परैः क्षेप्यमाणः करिपादस्थाने स्थितः। करिणोत्पन्नकारुण्येन भूमौ पादो न मुक्तः। त्रिदिनीं तथा स्थितः। दवे शान्ते स्वस्थानप्राप्तेषु जीवेषु पादो मुक्तः। परं रुधिरापूर्णः पतितः। क्षुत्तृषार्त्तो मृतः। तत्पुण्यप्रभावेण मगधाधिपश्रीश्रेणिकभार्याधारिणीपुत्रः मेघवृष्टिदोहदो मेघकुमारः प्रभूतभाग्यलभ्यभोगभाजनमभूत्। काले दीक्षां लात्वा विजयविमाने एकावतारी सुरः समभूत् ॥

तथा चौरोऽन्यराज्ञीभिर्लेभे वस्त्राद्यलङ्कृतः। न रतिं लघुराज्ञ्या तु प्रदत्ताभयतो यथा ॥ १३ ॥

जयपुरे मकरकेतुराजेन कश्चिच्चौरो गृहीत्वा बद्धः। शूलिकारोपणाय चालितः। पट्टराज्ञीकमलया दिवसमेकं मोचितः। भोजनवस्त्रताम्बूलादिना सत्कृत्य भूपतेः समर्पितः। स्पर्द्धया द्वितीयदिवसेऽपरया। एवं सप्तराज्ञीभिर्दिनमेकं मोचयित्वा पश्चादर्पितश्च। अष्टमदिवसेऽपमानगृहीतग्रामग्रासशृङ्गारया सौभाग्यदेव्या विनयेन नृपमानसं रञ्जयित्वाऽभयं दापयित्वा स्वल्पसामान्याहारवस्त्रावर्जितोऽपि यावज्जीवं मोचितश्चौरो निर्वृतिं लम्भितः। नृत्यगीतविनोदहर्षप्रकर्षभागभूत्। भूपेन पृष्टम्, भोः! कस्मादद्य सामान्यवस्त्रालङ्कृतोऽपि नृत्यसि ?। तेनोक्तम्, स्वामिन्! अद्य यावत् राज्ञीभिर्भृशमावर्जितोऽपि मरणभीत्या व्याघ्रसमीपबद्धहरितयवभोजिमेषवत् मया दुःखमेवानुभूतम्। अद्य तु शुष्कनीरसतृणप्रायसामान्याहारेणाऽपि व्यवहारिगृहबद्धगोवत्सवत् सुखमभयदानादनुभवामि, तेन नृत्यन्नस्मि। इत्यभयदाने सौभाग्यदेवीदृष्टान्तः॥ जयपुरे धनाभिधाऽऽरामिकेण पञ्च पूतरा दयापरिणामेन रक्षिताः। काले मृत्वा कुलपुत्रको जातः। बाल्ये मातृपितृमरणम्। देशान्तरे गच्छन् रात्रावटव्यां वटवृक्षाधः स्थितः। तत्रस्थैः पञ्चभिर्यक्षैः स दृष्टः। पूर्वभवोपकारीति ज्ञात्वा कथितमस्य, पञ्चमदिवसे राज्यं भविष्यति। तच्छ्रुत्वा हृष्टः। पञ्चमदिने मृतापुत्रनरपालनृपतेर्वाराणसीनगरीराज्यं जातम्। अमात्यारोपितराज्यभारः सुखान्येवानुभवन् सीमस्थै राज्योच्छेदाय रुद्धः। द्यूतक्रीडां कुर्वतोऽमात्यै रोधस्वरूपं कथितम्। तथापि न मुञ्चति द्यूतम्।

पश्चाद्भार्यया कथितम् । तस्यां पाशकान् पातयन्त्यां तेनोक्तम्—

स वटः पञ्च ते यक्षा ददते च हरन्ति च । अक्षान् पातय कल्याणि! यद्भाव्यं तद्भविष्यति ॥ १४ ॥

इत्युक्ते तैरेव राज्योच्छेदका बद्ध्वा पादयोः क्षिप्ताः। आश्चर्यं लोके, काले ऋषिसमायोगे पूर्वभवपृच्छा। कथितम्—पूर्वभवे पञ्चपूतररक्षणं कृतम्, स त्वं, ते यक्षा जाताः, तैरेव राज्यं रक्षितम्। इत्यभयदाने आरामिककथा ॥ श्रीपुरे कश्चिन्मात्सिकः क्रूरभार्यावचनेन रात्रौ तुर्ययामे जालमादाय मत्स्यान् धर्तुं निर्गतः। बह्वीं निशां विभाव्य मार्गे सहकारतरुतललीनमुनिपार्श्वे स्थितः। तत्र महात्मोपदेशेन प्रथमं जालागतो मत्स्यो मया मोक्तव्य इति नियमो गृहीतः। समुद्रतीरे गतः, प्रथमं जालपतितो मीनो मुक्तः। परीक्षाकारिदेवानुभावेन पुनःपुनः स एवागच्छत्। चिह्नं कृतं कपर्दिकाबन्धनेन। ततो भग्नः सन् गृहं गतः। क्रूरभार्यया आक्रोशैर्निष्कासितः। तेषामेव साधूनां सान्निधौ जगाम। पुनर्धर्मः पृष्टः। तैः प्रथमव्रतं जीवदयारूपमुक्तम्। पुनः पुनः प्रच्छनेनाऽणुव्रतपञ्चकं प्रोक्तम्। स सर्वमपि सम्यक् प्रतिपद्य धर्ममाराध्य च प्रान्ते शुभध्यानेन मृत्वा नालिनीगुल्माविमाने समुत्पन्नः। ततश्च्युत्वाऽवन्तीसुकुमालो जातः, भद्रासार्थवाहीसुतो द्वात्रिंशद्भार्यापतिः। स्वगृहच्चित्रशालोत्तीर्णश्रीसुहस्तिसूरिगण्यमाननलिनीगुल्माध्ययनस्वरूपं श्रुत्वा पूर्वभवं स्मृत्वा श्मशाने गत्वा दीक्षामुपाददे। शृगालीकृतोपसर्गं सहित्वा

नलिनीगुल्मविमाने समुत्पन्नः । तदुपसर्गस्थाने तत्सुतेन महाकालः प्रासादः कारितः ॥

सोऊण गुणिज्जंतं सुहत्थिणा नलिणगुम्ममज्झयणं । तक्कालं पव्वइओ चइत्तु भज्जाउ बत्तीसं ॥१५॥
तिहिं जामेहिं सिवाए अवच्चसहिआइ विहिअउवसग्गो । साहिअकज्जो निअगेहिं पूइओ अवन्तिसुकुमालो ॥१६॥

उज्जयिन्यां महाकालप्रासादः सम्प्रत्यपि श्रीसिद्धसेनरचितकल्याणमन्दिरप्रभावभवनमस्ति । इत्यभयदानोपरि अवन्तीसुकुमालकथा ॥ एकदा श्रेणिकसभायां श्रीअभयकुमारादिसमुदाययुतायां श्रेणिकेनाऽभाणि—संप्रति नगरमध्ये किं वस्तु सुलभमस्ति ? । तत्र क्षत्रियाः प्रोचुः— सांप्रतं पलं सुलभमस्ति । ते निर्दया एवं वदन्ति स्म । अभयकुमारेण चिन्तितम्— अहमद्यैषां परीक्षां करिष्यामि । ततो रात्रौ सर्वक्षत्रियगृहेषु पृथक् पृथक् गत्वाऽवोचत्—भो राजपुत्राः ! अद्य राज्ञो महाव्याधिरुत्पन्नोऽस्ति । वैद्यैर्बहुभिरप्यौषधैश्चिकित्सितोऽपि कोऽपि गुणो न दृश्यते । किन्तु यदि मनुष्यसत्कं कालिजमांसं टङ्कद्वयप्रमाणं भवेत्, तदा जीवेत्, अन्यथा मरिष्यत्येव । यूयं तदीयग्रासोपजीविन एतावदपि न करिष्यथ ? । तत एकेनोक्तम्— दीनारसहस्रं गृहाण, परं मां मुञ्च, अन्यत्र गच्छ । गृहीतं द्रव्यम्, गतः पुनरन्यगृहे, तथैव चोक्तम् । तेनापि दीनारसहस्रमर्पितम्, न तु मांसम् । एवमपरापरगृहेषु सकलां रात्रिं परिभ्रम्य मीलिता दीनाराणां लक्षाः । प्रभाते सभायां

दर्शितं सर्वं क्षत्रियाणाम्, भोः! यूयमेवं वदथ– यद् मांसं सुलभम्, तदद्य एतावता द्रव्येणाऽपि न प्राप्तम्। ततस्ते लज्जिता मौनमालम्ब्य स्थिताः। अभयकुमारेण सर्वेऽपि हक्किताः–अरे मूर्खाः! आत्मीयं मांसं सर्वेषामपि वल्लभं भवति। मुधैव यूयमेवं मांसलुब्धाः प्रलपथ। यतः—

अमेध्यमध्ये कीटस्य सुरेन्द्रस्य सुरालये। समाना जीविताकाङ्क्षा समं मृत्युभयं द्वयोः ॥ १७ ॥

दुर्योनिमपि संप्राप्तः प्राणी मर्तुं न वाञ्छति। स्वादुमन्तो भवन्ति स्म स्वाहाराः कुत्सिता अपि ॥ १८ ॥

यावन्ति रोमकूपाणि पशुगात्रेषु भारत!। तावद्वर्षसहस्राणि पच्यन्ते पशुघातकाः ॥ १९ ॥

हेमधेनुधरादीनां दातारः सुलभा भुवि। दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥ २० ॥

इत्यभयदाने अभयकुमारकथा ॥ यस्तु जीवहिंसां करोति, स तु वधबन्धनादि दुःखभाग् भवति। तद्यथा–

गोपो बब्बूलशूलाग्रप्रोतयूकोत्थपातकात्। अष्टोत्तरशतं वारान् शूलिकारोपणाद् मृतः ॥ २१ ॥

नागपुरे माधवो गोपाल एकदा गोचारणार्थं गतो महाटव्यां तापार्त्तो बब्बूलतरुतले निषण्णः। मस्तकाद् यूका उत्सङ्गे पतिता दृष्टा। बब्बूलतीक्ष्णशूल्यां निर्दयत्वेन प्रोता, एषा मद्देहसारचौरिणीति विचिन्त्य।

तत्पातकोदयात् तस्मिन्नेव भवे शूलाप्रोतो मृतः। एवं सप्तोत्तरशतवारं पृथक् पृथग् भवेषु चौर्यादिदोषमासाद्य तथैव शूलादिविडम्बनया मृतः। अष्टोत्तरशततमे भवे स्तोकतत्कर्मोदयात्तापसी दीक्षा प्राप्ता। सर्वदा वनवासी शुष्कपत्रफलभोजी निस्सङ्गव्रतधारी वने तिष्ठति स्म विभङ्गज्ञानवान्। तस्मिन्नवसरे तत्रासन्नचम्पानगरीनरेश्वरनरसिंहपट्टराज्ञीरत्नादेवीरत्नाभरणपेटी चौरेण गृहीता । यामिकाः पदपङ्क्त्यनुसारेण तत्पृष्ठे लग्नाः। चौरो नंष्ट्वा तद्वने तापससमीपे तां मुक्त्वा वटे चटित्वा स्थितः । प्राहरिकास्तत्रागताः । सुप्तस्तापसः सरत्नपेटीको धृत्वा भूपतेः पुरो मुक्तः । विभङ्गज्ञानी स्वकृतकर्म गर्हन् मौनी दुष्टनृपेण शूलिकामारोपितः । तत्कर्मक्षयं कृत्वा सुरो जातः । तथा—

श्रूयते प्राणिघातेन रौद्रध्यानपरायणौ । सुभूमो ब्रह्मदत्तश्च सप्तमं नरकं गतौ ॥ २२ ॥

किं बहुना ?, स्वहितमिच्छता उभयलोकसौख्यकरमभयदानमाराधनीयम्॥ अथ सुपात्रदानम्—सु शोभनं पात्रं स्थानं ज्ञानदर्शनचारित्रतपःक्षमाशमशीलदमसंयमादीनां गुणानाम् । यद्वा, सु अतिशयेन पापात् त्रायते इति सुपात्रम् । यतः—

पाकारेणोच्यते पापं त्रकारस्त्राणवाचकः । अक्षरद्वयसंयोगे पात्रमाहुर्मनीषिणः ॥ २३ ॥

एवंविधनामानुरूपगुणसुपात्रदानं दुर्लभम् ॥ यतः—

लब्भइ तिलोअलच्छी लब्भइ सव्वं पि कामिअं सुक्खं । इक्कं चिअ न विलब्भइ सुपत्तदाणं जगप्पहाणं ॥२४॥

सुपात्रे भाग्यवतामेव लक्ष्मीर्लगति । यतः—

एकेषां दुःखलब्धानपहरति हठात् पार्थिवोऽर्थानकस्मादन्येषां कृष्णवर्त्मा दहति विषयिणां याति वेश्यागृहेषु ।
स्नात्रे बिम्बे गृहे वा विबुधपतिपतेरर्हतः पुण्यभाजां वस्त्रादौ चोपयोगं प्रतिदिनमपरेषां च सत्साधुयोगे ॥२५॥

न्यायोपात्तं समुचितगुणं कल्पनीयं यतीनां वस्त्रं पात्रं परममशनं भेषजं रोगहारि ।
दत्तं भक्त्या विपुलमनसा श्रावकेण प्रकामं धत्ते मुक्तिं, नरसुरभवे का कथा यत्र लभ्ये ?॥ २६ ॥

यथा सुपात्रदानात् श्रीशालिभद्रः श्रेष्ठिगोभद्रसुभद्रापुत्रस्त्रैलोक्यस्मरणीयनामा समजनि । यथा—

यद् गोभद्रः सुरपरिवृढो भूषणाद्यं ददौ यज्जातं जायापदपरिचितं कम्बलीरत्नजातम् ।
पण्यं यच्चाऽजनि नरपतिर्यच्च सर्वार्थसिद्धिस्तद् दानस्याद्भुतफलमिदं शालिभद्रस्य सर्वम् ॥ २७ ॥

पादाम्भोजरजःप्रमार्जनमपि क्ष्मापाललीलावतीदुष्प्रापाद्भुतरत्नकम्बलदलैर्यद्वल्लभानामभूत् ।
निर्माल्यं नवहेममण्डनमपि क्लेशाय यस्यावनीपालाऽऽलिङ्गनमप्यसौ विजयते दानात् सुभद्राङ्गजः ॥२८॥

स्वर्भोगभङ्गी नृपतिः क्रयाणकं सुवर्णनिर्माल्यमभूत् स्रगादिवत् ।
भूपस्य मानेऽप्यपमानचिन्तनं शालेर्महाश्चर्यकरं चतुष्टयम् ॥ २९ ॥
कृत्वा समर्घ्यं यदि वा महर्घ्यं क्रयाणकं श्रेणिकनामधेयम् ।
यथा तथा मातरिदं गृहाण प्रमाणमम्बैव किमत्र पृच्छा ? ॥ ३० ॥

तथा तत्समृद्धिं दृष्ट्वा श्रेणिकनृपवचः--

स्नुही महातरुर्वह्निर्बृहद्भानुर्यथोच्यते । सारं तेजोवियोगेऽपि नरदेवास्तथा वयम् ॥ ३१ ॥

पूर्वं न मन्त्रो न तदा विचारः स्पर्द्धा न केनाऽपि फलेन वाञ्छा ।
पश्चानुतापोऽनुशयो न गर्वो हर्षस्तथा सङ्गमके बभूव ॥ ३२ ॥
अनुत्तरं दानमनुत्तरं तपोऽप्यनुत्तरं मानमनुत्तरं यशः ।
श्रीशालिभद्रस्य गुणा अनुत्तरा अनुत्तरं धैर्यमनुत्तरं पदम् ॥ ३३ ॥

शालिभद्रोऽपि मेऽधीशः स्थूलभद्रः पितुर्मृतेः । विरक्तः कार्त्तिको दूनो मेतार्यस्तु विगोपितः ॥ ३४ ॥

इति सुपात्रदाने श्रीशालिभद्रदृष्टान्तो वाच्यः ॥ अपि च--

पात्रक्षेत्रमिदं जीयाच्चिरं यत्रार्थशालयः । धीमद्भिः सकृदप्युप्ताः संलूयन्ते सहस्रशः ॥ ३५ ॥
पश्चाद् दत्तं परैर्दत्तं लभ्यते वा न लभ्यते । स्वहस्तेन तु यद्दत्तं लभ्यते नाऽत्र संशयः ॥ ३६ ॥
अत्रार्थे श्रीयुगादिदेवदृष्टान्तः । यथा—
दद्याद् दानं सुपात्रायोन्नताय सुकृती यथा । घृतदानाद् मुनेरासीत् प्रथितः प्रथमो जिनः ॥ ३७ ॥
आदौ धनभवे येन घृतमेघायितं तथा । जज्ञे यथोर्वीशस्यश्रीः श्रीनाभेयः स वः श्रिये ॥ ३८ ॥
अन्यस्मादप्यवाप्याऽन्नं संविभज्योपभुज्यताम् । यत्प्रभावादभूच्चक्री भरते भरतेश्वरः ॥ ३९ ॥
पञ्चशतसाधुयोग्याहारविहरणसंविभागकरणपुण्यतः श्रीभरतेश्वरश्चक्री भोगभाजनमभूत् ।
लोकद्वितयमुद्धर्तुं पूजयेत् पात्रमुत्तमम् । श्रेयांसेन युगादीशो यथाऽकार्यत पारणम् ॥ ४० ॥
सिरिसेअंसकुमारो निस्सेअससामिओ कह न हुज्जा ? । संवच्छरतवतविओ रिसहो पाराविओ जेण ॥४१॥
अत्र कविघटना—
राज्यश्रीर्भवताऽर्जिताऽर्थिनिवहस्त्यागैः कृतार्थीकृतः सन्तुष्टोऽपि गृहाण दानमधुना तन्वन् दयां दानिषु ।
इत्यब्दं प्रतिबोध्य दक्षिणकरं श्रेयांसतः कारयन् प्रत्यग्रेक्षुरसेन पूर्णमृषभः पायात् स वः श्रीजिनः ॥ ४२ ॥

पूजाभोजनमानशान्तिककलापाणिग्रहस्थापनाचोक्षक्षेपणहस्तकार्पणमुखव्यापारबद्धस्त्वहम् ।
वामोऽहं रणसंमुखाङ्कगणनात्रामाङ्गशय्यादिकृत् द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽस्मि न त्वं पुनः ॥४३॥

इति हस्तसंवादः ॥

इक्षोस्त्वं स्वकरग्रहेण महिमां शक्रादिपूच्चैरदाः श्रेयांसेन स पारणं निजरसेनाढ्यं तवाऽचीकरत् ।
इत्थं यद्दिनतः कृतप्रतिकृतिन्यायोऽभवत्तद्दिने लात्वा लम्भनमङ्गनास्तदधुनाऽप्यन्योन्यमायान्ति किम् ?॥४४॥

वैशाखशुक्लतृतीया श्रीआदीश्वरप्रथमपारणाद् लोकेऽक्षयतृतीयायुगादिपर्वगुडेक्षुरसमण्डकभोजनलम्भनाद्युत्सववती समभूत् ।

रिसहेससमं पत्तं निरवज्जं इक्खुरससमं दाणं । सेअंससमो भावो हविज्ज जइ मग्गिअं हुज्जा ॥४५॥
भुवणं जसेण भयवं! रसेण भवणं धणेण पडिहत्थं । अप्पा निरुवमसुक्खे सुपत्तदाणं महग्घविअं ॥४६॥

इति सुपात्रदाने श्रीआदिनाथश्रेयांसदृष्टान्तौ वाच्यौ ॥

अन्नदातुरधस्तीर्थङ्करोऽपि कुरुते करम् । तच्च दानं भवेत् पात्रे दत्तं बहुफलं यतः ॥ ४७ ॥
कालेऽल्पमपि पात्राय दत्तं भूयो भवेद्यथा । जिनाय चन्दनादत्ता कुल्माषाः कल्मषच्छिदे ॥४८॥

यदपि तदपि शुद्धं चन्दनावत् प्रदत्तं झगिति फलति पात्रेऽन्यत्र नो चार्वपि स्वम् ।
जलधिजलमसारं वारिवाहेऽमृतीस्यात् मधुरमपि हि दुग्धं पन्नगाऽऽस्ये विषं स्यात् ॥ ४९ ॥
पृथ्वीनाथसुता भुजिष्यचरिता जञ्जीरिता मुण्डिता क्षुत्क्षामा रुदती विधाय पदयोरन्तर्गतां देहलीम् ।
कुल्माषान् प्रहरद्वयव्यपगमे मे सूर्पकोणे स्थितान् दद्यात् पारणकं तदा भगवतः सोऽयं महाभिग्रहः ॥५०॥
श्रीवर्द्धमानाभिग्रहः षण्मासान्ते परिपूर्णः श्रीचन्दनादत्तकुल्माषपारणात् समजनि । अत्राशीर्वादः—
पारणं दुरितवृन्दवारणं कारणं सकलसौख्यसम्पदाम् । तारणं भवपयोधिमज्जने श्रेयसेऽस्तु भवतां जिनेशितुः ॥५१॥
श्रेयांसेन यदर्जितं सुकृतिना पुण्यं युगादेर्जिनात् श्रीवीराद् दधिवाहनस्य सुतया कुल्माषदानेन च ।
मासान्ते मुनिसत्तमाद् यदमलं श्रीसङ्गमेनार्जितं तत् त्वां भद्र ! विशुद्धवासन ! सदा श्रेयः समागच्छतु ॥५२॥
श्रीचन्दनादत्तकुल्माषसंजातश्रीमहावीरपारणे सुरकृतसार्द्धद्वादशरत्नसुवर्णकोटिवृष्टिभरितधनावहश्रेष्ठिगृहं
दृष्ट्वा प्रातिवेश्मिक्या चिन्तितम्—यदहो ! कुल्माषदानाद् दुर्बलस्तपस्वी यदि महतीमीयतीमृद्धिं ददाति,
तदहं पुष्टाङ्गं लिङ्गिनं सघृतशर्करपरमान्नेन सन्तोष्याऽपारां लक्ष्मीं गृह्णामि । इति विचिन्त्य तथा कृत्वा वारं वार-
माकाशसंमुखं विलोकयन्तीं जरतीं वीक्ष्य ज्ञाततच्चेतसा व्रतिना प्रोक्तम्—मुग्धे ! मत्तपसा तव भावेनाऽऽधा-

कर्मिकाहारदानेनाऽऽकाशात् पाषाणवृष्टिरेव भाविनी, न तु रत्नवृष्टिः । यतः—

दधिमधुघृतान्यपात्रे क्षिप्तानि यथाऽऽशु नाशमुपयान्ति । एवमपात्रे दत्तानि केवलं नाशमुपयान्ति ॥ ५३ ॥

इति सुपात्रदाने चन्दनबालादृष्टान्तः ॥ तथा मूलदेवो राजपुत्रः ससव्यसनी यथा—

द्यूतकारे द्यूतकारो वार्त्तिके वार्त्तिकश्च सः । तत्कालं स्फाटिकस्येव जग्राह पररूपताम् ॥ ५४ ॥

तदा राज्ञा निष्कासितः देशान्तरे गच्छन् मासोपवासकारकमुनिप्रदत्तकुल्माषपुण्यतः प्रवरं राज्यं प्राप्तः । यथा—

धन्नाणं खु नराणं कुम्मासा हुन्ति साहुपारणए । गणियं च देवदत्तं दन्तिसहस्सं च रज्जं च ॥ ५५ ॥

इति मूलदेवकुमारदृष्टान्तः ॥

वीरस्य कारयिष्यामि चतुर्मासकपारणम् । जीर्णश्रेष्ठीति सद्ध्यानाद् द्वादशं स्वर्गमार्जयत् ॥ ५६ ॥

राजगृहे नगरे जीर्णश्रेष्ठी श्रीमहावीरस्य चतुर्मासकत्यक्ताहारस्य प्रासुकाहारेण पारणं कारयिष्यामीति शुभध्यानवांश्चतुर्मासकान्ते स्वगृहद्वारे श्रीवीरविलोकनार्थं द्वारे तिष्ठन् शुभध्यानवशात् द्वादशस्वर्गायुर्बद्ध्वा तदूर्ध्वमुपार्जयन्नपि अभिनवश्रेष्ठिभिक्षाचरबुद्धिदत्तकुल्माषैः श्रीवीरपारणं देवदुन्दुभिनादेन द्वादश-

कल्पादधिकं ध्यानभङ्गाद् नार्जयत्। इति सुपात्रदाने जीर्णश्रेष्ठिदृष्टान्तः ॥

कश्चिद् घृतभृते पात्रेऽर्जित्वा सर्वार्थसिद्धिकाम्। मुनिना मा पतेत्युक्तः स्थितो द्वादशताविषे ॥ ५७ ॥

कोल्लरग्रामे चम्पकव्यवहारिणा घृतदानेनाऽऽकण्ठं निभृतपात्रोऽपि गुणाकरमुनिर्ज्ञानी तस्य लाभदर्शनेन न निषेधयति स्म। एवं भाववशात् सर्वार्थसिद्धिमुपार्जयत्। अत्रान्तरे ध्यानभङ्गः--अहो! लोभी मुनिरेकाकी किं करिष्यति घृतेनैतावन्मात्रेण?। ज्ञानिना तच्चित्तभावं ज्ञात्वा मा पत मा पतेत्युक्त्वा पश्चात् पतन् द्वादश-देवलोके संस्थापितः। इति सुपात्रघृतदाने चम्पकोदाहरणम् ॥

सम्यग्मिथ्यादृशौ विप्रौ सुपात्रापात्रदानतः। श्रीश्रेणिकगृहे नन्दिषेणसेचनकद्विपौ ॥ ५८ ॥

पूर्वभवे हल्लूरग्रामे देवशर्मसोमशर्माभिधौ द्वौ विप्रौ। देवशर्मा मिथ्यात्वी, सोमशर्मा श्राद्धो निर्धनः। अपरो धनी कुपात्रत्यागी, तेन लक्षभोजनयागः कृतः। श्राद्धो द्विजः तद्गृहे परिवेषणादिकार्यकरणार्थमवशि-ष्टाशनंभाटकप्रदानेन स्थितः।

अग्निर्विप्रो यमो राजा समुद्र उदरं गृहम्। सप्तैतानि न पूर्यन्ते पूर्यमाणानि नित्यशः ॥ ५९ ॥

श्राद्धविप्रेणेति विचिन्त्य स्वभागागतं प्रासुकं सकलमपि मोदकादिकं साधुसाधर्मिकेभ्यः प्रदत्तम्। तत्पुण्या-

नुभावाद् मगधाधिपश्रीश्रेणिकसुतो नन्दिषेणः पञ्चशतराज्ञीपतिः प्रवरभोगफलकर्मोदयः समभूत्, अपरस्तु कुपात्रपोषात् सेचनकहस्ती बहुभोजनभोगभाग् । इति सुपात्रे नन्दिषेणकथा ॥

दारिद्र्यनाशनं दानं शीलं दुर्गतिनाशनम् । अज्ञाननाशिनी प्रज्ञा भावना भवनाशिनी ॥ ६० ॥

संसारवारांनिधियानपात्रं दानं निदानं सुगतेर्विभाति ।
सावद्यकारो रथकारजीवो दिवं गतो यद् बलभद्रदानात् ॥ ६१ ॥

श्रीकृष्णवृद्धभ्राता श्रीरामः प्रव्रज्यां लात्वा नगरमध्ये गच्छन् कूपकण्ठस्थस्त्रीभिः सविस्मयं तद्रूपादिसौभाग्यमोहिताभिर्विलोकितः । तदवसरे तद्रूपं विलोकयन्त्येका घटस्थाने पुत्रकण्ठे रज्जुं विक्षेपयन्ती युवतिर्दृष्टा । महर्षिणा निवारिता । धिगस्तु मद्रूपस्य नरकनिदानस्येति ध्यात्वा नगरग्रामादिषु विहरणार्थं मया नागन्तव्यमित्यभिग्रहं जग्राह । वने तिष्ठति । तत्र यदा कोऽपि सार्थः समागच्छति तदा पारणकम्, नान्यथा ।

जेणुग्गतवं तत्तं अवराहं दट्ठु निअयरूवस्स । तुङ्गीगिरिवरसिहरे सो राममहामुनी जयउ ॥ ६२ ॥

तत्रैकदा रथकारः काष्ठग्रहणार्थमागतः, अर्द्धकर्त्तितसर्गशाखाधो भोजनार्थमुपविशन् मृगज्ञापितमार्गं

रामं दृष्ट्वा हृष्टो भक्तपानदानायोद्यतः । ऋषिस्तत्रागतः समृगः । तावत् प्रचण्डपवनाहृतशाखापतितास्त्रयोऽपि मृताः, पञ्चमदेवलोके गताः ।

रामो तवप्पभावा सुपत्तदाणाउ झत्ति रहकारो । अणुमोअणाइ हरिणो सम्पत्ता बम्भलोगंमि ॥ ६३ ॥

भावण भावइ हरिणलो नयणे नीर झरन्त । मुणि वहरावत करि करी जइ हुं माणस हुन्त ॥ ६४ ॥

इति सुपात्रदाने रथकारमृगदृष्टान्तः ॥

जयन्ति वङ्कचूलाद्याः कोशा चाश्रयदानतः । अवन्तिसुकुमालश्च तीर्णाः संसारसागरम् ॥ ६५ ॥

अन्नोपाश्रयभैषज्यवस्त्रपात्रादिदानतः । उपष्टम्भोऽनेकधा स्यादन्नदानं विशिष्यते ॥ ६६ ॥

मुनिप्रदत्तपाथेयसक्तुपुण्येन कस्यचित् । कर्करैर्निभृता नीवी जाता सारमणीमयी ॥ ६७ ॥

राजगृहनगरे धनसारव्यवहारी एकान्तरोपवासद्विप्रतिक्रमणत्रिदेवार्चापरः समृद्धो वसति स्म । कियता कालेन निर्धनो जातः । पत्नीप्रेरितः सक्तुपाथेयो गोर्बरग्रामे शालकपार्श्वे द्रव्यमार्गणार्थं गतः । निर्धनत्वादपमानितोऽसत्कृतोऽदत्तविभवः पश्चादागच्छन् नदीतीरे मासोपवासी मुनिः सक्तुदानात् पारणं कारितः । पत्नीसंतोषाय नदीतः सुवृत्तवर्णाढ्यैः कर्करैर्नीवीं भृत्वा गेहे समागतः । शासनदेवताप्रभावान्नीवीकर्कराः सर्वेऽपि

बहुमूल्यरत्नानि जाताः । "सत्थुगदाणप्पभावगरयणमयकक्करा जाया" तदनु भोगी सुखी धनी ।

पात्रे त्यागी गुणे रागी भोगी परजनैः सह । शास्त्रे बोद्धा रणे योद्धा पञ्चाङ्गः पुरुषः स्मृतः ॥ ६८ ॥

प्रासादादिपुण्यकरणीयपरः प्रथितो बभूव। इति सुपात्रे धनसारकथा ॥ तथा धन्योऽष्टभार्यादिभोगपुरन्दरः श्रीदानधर्म्माराधनतः समभूत्, सर्वार्थसिद्धौ प्राप्त एकावतारी। एवं कयवन्नादयोऽपि भूयांसो भव्यास्तीर्णाः संसारसागरं सुपात्रदानात् । यदुक्तम्—

श्रीनाभेयजिनेश्वरो धनभवे श्रेयःश्रियामाश्रयः श्रेयांसः स च मूलदेवनृपतिः श्रीचन्दना नन्दना ।
धन्योऽयं कृतपुण्यकः शुभमनाः श्रीशालिभद्रादयः सर्वेऽप्युत्तमदानदानविधिना जाता जगद्विश्रुताः ॥६९॥

उत्तमपत्तं साहू मज्झिमपत्तं च सावया भणिया । अविरयसम्मदिट्ठी जहन्नपत्तं मुणेयव्वं ॥ ७० ॥

तथा—

मिथ्यादृष्टिसहस्रेषु वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेषु वरमेको महाव्रती ॥ ७१ ॥
महाव्रतिसहस्रेषु वरमेको हि तात्त्विकः । तात्त्विकस्य समं पात्रं न भूतो न भविष्यति ॥ ७२ ॥
सत्पात्रं महती श्रद्धा काले देयं यथोचितम् । धर्म्मसाधनसामग्री बहुपुण्यैरवाप्यते ॥ ७३ ॥

तथा दुष्टा अपि पात्रदानतो भोगसौभाग्यभाजनं भवन्ति । यतः—

प्राणिस्वेच्छाच्छिदः क्रूराः कारागारनियोगिनः । मृत्वा सत्पात्रदानेन जायन्ते नृपयोषितः ॥ ७४ ॥

तदपि सद्भाववासनावासितचेतसा दत्तं श्रेयस्करम् । यदुक्तम्—

दातव्यमिति यद् दानं दीयतेऽनुपकारिणे । क्षेत्रे काले च भावे च तद्दानं सात्त्विकं स्मृतम् ॥ ७५ ॥

श्रीशालिभद्रादीनाम् ।

यस्तु प्रत्युपकाराय फलमुद्दिश्य वा पुनः । प्रदीयते परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ ७६ ॥

चन्दनबालाप्रातिवेश्मिकवृद्धा निदर्शनम् ।

क्रोधाद् बलाभियोगाद् वा मनोभावं विनाऽपि वा । यद् दीयते हितं वस्तु तद् दानं तामसं स्मृतम् ॥७७॥

श्रेणिकदासी कपिला, कटुतुम्बदात्री नागश्रीश्च दृष्टान्तः । तथा–

क्षिप्तकालं कृतावज्ञं सानुतापं विकत्थितम् । हीयमानमनौचित्यं दानमाहुर्मलीमसम् ॥ ७८ ॥

क्षिप्तकाले भवेन्नारी निर्धना पतिवर्जिता । अपुत्रा च कृतावज्ञे सानुतापे च दुर्भगा ॥ ७९ ॥

विकत्थिते स्यादल्पायुर्हीयमाने च हीनता । अनौचित्ये भवेद् व्याधिः षट् त्यागाश्च मलीमसाः ॥ ८० ॥

अपि च--कालउं वांकउ मुंह कर विरत्तउ हूउ हयास । तिणिं दीधइ हुइ कवण गुण जं फल देइ पलास ॥८१॥

अनादरो विलम्बश्च वैमुख्यं विप्रियं वचः । पश्चात्तापश्च पञ्चाऽपि सद् दानं दूषयन्त्यमी ॥ ८२ ॥

भिउडी उड्ढालोअणा नीआ दिट्ठी परंमुहं वयणं । मोणं कालविलम्बो नकारो छव्विहो होइ ॥ ८३ ॥

भूषणान्यमूनि—

आनन्दाश्रूणि रोमाञ्चा बहुमानं प्रियं वचः । किंचाऽनुमोदना पात्रदानभूषणपञ्चकम् ॥ ८४ ॥

ददतो युध्यमानस्य वदतः पुलको न चेत् । आत्मनश्च परेषांश्च धिग् त्यागं पौरुषं वचः ॥ ८५ ॥

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम् । त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥८६॥

वाणी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ ८७ ॥

किं बहुना ?, कृपणधनानि निष्फलान्येव । यतः—

शास्त्रैर्निष्प्रतिभस्य किं गतदृशो दीप्रैः प्रदीपैश्च किं किं क्लीबस्य वधूजनैः प्रहरणैः किं कातरस्योल्बणैः ? ।
किं वाद्यैर्बधिरस्य भूषणगणैर्लावण्यहीनस्य किं किं भोज्यैर्ज्वरजर्जरस्य विभवैः प्रौढैरदातुश्च किम् ? ॥ ८८ ॥

चतुरः स एव नरः, यः पात्रे स्वधनं नियोजयति । यदुक्तम्—

पात्रे धनं योजयते विदग्धो गात्रे धनं योजयते विमुग्धः ।
पात्रे च गात्रे च न दत्तभुक्तं खात्रेण तद् याति नरस्य वित्तम् ॥ ८९ ॥

मुत्तूण पत्तनिअरं जडाण निअपरिमलं समप्पन्तो । सहसुम्मूलणदुक्खं वालयवालो सि किं भणिमो ? ॥९०॥

एकदा वनगतेन श्रीभोजेन गलन्मधूकं दृष्ट्वा धनपालपार्श्वे पृष्टम्—कस्माद् रोदिति मधूकः ?। कविनोक्तम्—

यदाऽस्ति पात्रं न तदास्ति वित्तं यदास्ति वित्तं न तदास्ति पात्रम् ।
इतीव चिन्ताकुलितो मधूको मन्येऽश्रुपातै रुदितं करोति ॥ ९१ ॥

गुरूओ वि न सेविज्जइ जो लहुपत्तेहिं होइ परिवरिओ । पत्तविसेसे चिंचिणि वंकं चुंकं फलं देइ ॥९२॥
लहुओ वि हु सेविज्जइ जो गुरुपत्तेहिं होइ परिवरिओ । पत्तविसेसे कदली अमियसमाणं फलं देइ ॥९३॥

सत्पात्रं मूले द्विविधम् । यथा—

स्थावरं जङ्गमं चेति सत्पात्रं द्विविधं मतम् । स्थावरं तत्र पुण्याय प्रासादप्रतिमादिकम् ॥ ९४ ॥
ज्ञानाधिकं तपःक्षामं निर्ममं निरहङ्कृतिम् । स्वाध्यायब्रह्मचर्यादियुक्तं पात्रं तु जङ्गमम् ॥ ९५ ॥

स्थावरं दशविधम्—

जिणभवणबिम्बपुत्थयसङ्घसरूवाइं सत्त खित्ताइं । जुन्नुद्धारो पोसहसाला साहारणं दसहा ॥ ९६ ॥

एवंविधेषु सुपात्रेषु दत्तं बहुफलं भवति ॥

अभिगम्य कृते दानं त्रेतास्वाहूय दीयते । द्वापरे प्रार्थनादानं सेवादानं कलौ युगे ॥ ९७ ॥

इत्याद्यनेकदृष्टान्तपरम्परां श्रुत्वा श्रीसुपात्रदानं मोक्षस्वर्गचक्रित्वादिसम्पन्निदानं समाराधनीयम् ।

दुल्लहा उ मुहादाई मुहाजीवी वि दुल्लहा । मुहादाई मुहाजीवी दोवि गच्छंति सुग्गइ ॥ ९८ ॥ त्ति बेमि ॥

मुहादाई दुर्लभः, अत्र भागवतोदाहरणं यथा--कश्चित् परिव्राजकः कमपि भक्तिमन्तं भागवतमवादीत्-तव गृहे वर्षासमये तिष्ठामि । तेनोक्तम्--यदि प्रत्युपकारं न करोषि, तदा तिष्ठ । तेन प्रतिपन्नम्। ततः प्रदत्तस्तस्मै समाश्रयः । भोजनादिभिर्भक्तिं चकार तस्य गृहपतिः । अतिक्रान्ते च कियति काले चौरैस्तस्याश्वोऽपहृतः । प्रभातं जातमिति विचिन्त्य न शक्तास्तमश्वं ग्रहीतुम् । ततोऽतिवृक्षगहने तं बद्ध्वा तेऽन्यत्र गताः । अत्रान्तरे प्रातरेव स्नातुं परिव्राजकस्तटाकं जगाम । दृष्टश्च तेन सरःसमीपवर्त्तिन्यां जाल्यामश्वः, प्रत्यभिज्ञातश्च सोयमश्वोऽस्मदुपकारिणो भागवतस्य चौरैर्हृतः । ततस्तेन जाल्यां धौतवासो मुक्त्वा स्वस्थानं गत्वा गृहपतिपुरुषाणामग्रे उक्तम्-- मम स्नातुमितः सरसि गतस्य जाल्यां धौतवासो विस्मृतः । ततस्तैर्जनः प्रेषितो

गतस्तत्र तेन दृष्टोऽश्वः, समानीतश्च कथितो गृहपतये । ततस्तेन गृहपतिनाऽचिन्ति-- अये ! व्रतिना व्याजेन ममोपकारः कृतः । ततः परिव्राजकमाहूय प्रोक्तम्--भद्र ! व्रज त्वं यस्मादुपकारिणि दत्तं दानं निष्फलमुपजायते ॥ मुहाजीवीत्युदाहरणं यथा--कश्चिन्नृपतिर्जातवैराग्यो धर्मपरीक्षां चक्रे--को वाऽनिसृष्टं भुङ्क्ते ?, ततस्तं परीक्षे; इति संप्रधार्य पुरुषानादिदेश-- राजा मोदकान् प्रयच्छति, समागत्य गृह्यताम् । इत्याकर्ण्य उद्घोषणाम्, जग्मुः कार्पटिकप्रभृतयो जनाः मोदकार्थिनः । पृष्टाश्च ते भूभुजा--केन भवन्तो जीवन्ति ?। तत्रैकेनोक्तम्--अहं तावन्मुखेन । अपरेणोक्तम्--अहं पादाभ्याम्। अपरेणोक्तम्--अहं हस्ताभ्याम् । अन्येनोक्तमहं लोकानुग्रहेण । जैनक्षुल्लक आकारितः पृष्टस्तेनोक्तम्--अहं मुधेति । ततस्तान् नृपतिः पुनर्जगाद-कथमिति ?। ततः प्रथमः प्राह--अहं तावत् कथको जनानां रामायणादिकथां कथयामि, तेन जीवामि। द्वितीयः प्राह--अहं लेखवाहको घटीद्वयमध्ये योजनं लङ्घयामि,तेनाहं पादाभ्यां जीवामि । तृतीयः प्राह--अहं लेखकोऽतो हस्ताभ्यां जीवामि । भिक्षुणोक्तम्--अहं लोकानुग्रहेण जीवामि । क्षुल्लकसाधुनोक्तम्--संसारासारतां विलोक्य महेभ्यसुतः प्रव्रजितः प्रतिपद्य जैनधर्मम् । ततो मुधिकया यथोपलब्धेनाऽऽहारेण जीवामि । इति श्रुत्वा तद्भाषितमहो ! एष धर्मः सर्वदुःखप्रमोक्षसाधक इति निश्चित्याऽऽचार्यसमीपे प्रतिबुद्धो राज्ये पुत्रं संस्थाप्य

प्रव्रज्यां नृपतिरग्रहीत् । इत्याद्यनेकदृष्टान्ताः सुपात्रदानोपरि वाच्या ग्रन्थगौरवभयादनुक्ता अपि ॥ अथ तृतीयमनुकम्पादानम्—दीनदुःस्थितदुर्बलदारिद्र्यपराभूतानां देहिनां दयया पात्रापात्रविचारविरहितं यद्दीयते अन्नपानवस्त्रपात्राश्रयादि तदनुकम्पादानम्। यतः—

इयं मोक्षफले दाने पात्रापात्रविचारणा । दयादानं तु सर्वज्ञैर्न कापि प्रतिषिध्यते ॥ ९९ ॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः । न हि संहरति ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि ॥ १०० ॥
वर्षन् क्षारार्णवेऽप्यब्दो मुक्तात्वं क्वापि जायते । सर्वेषां ददतो दातुः पात्रयोगोऽपि संभवेत् ॥१०१॥
दानक्षणे महेच्छानां किं पात्रापात्रचिन्तया ?। दीनाय देवदूष्यार्धं यथाऽदात् कृपया प्रभुः ॥ १०२ ॥
अपकारिष्वपि कृपां सुधीः कुर्याद् विशेषतः । दन्दशूकं दशन्तं तं वीरः प्राबोधयद् यथा ॥ १०३ ॥
प्रसिद्धा कथा ॥ धार्मिकत्वं कृपयैव शोभते—

लक्ष्म्या गार्हस्थ्यमक्ष्णा मुखममृतरुचिः श्यामयाऽम्भोरुहाक्षी भर्त्रा न्यायेन राज्यं वितरणकलया श्रीर्नृपो विक्रमेण ।
नीरोगत्वेन कायः कुलममलतया निर्मदत्वेन विद्या निर्दम्भत्वेन मैत्री किमपि करुणया भाति धर्मोऽन्यथा न ॥१०४॥
पठितं श्रुतं च शास्त्रं गुरु परिचरणं गुरोस्तपश्चरणम् । घनगर्जितमिव विजलं विफलं सकलं दयाविकलम् ॥१०५॥

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवाऽवधार्यताम् । आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०६ ॥

इत्याद्युपदेशप्रकटनप्रवणश्रीआर्यसुहस्तिगुरुदर्शनसमुद्भूतजातिस्मरणदृष्टद्रमकत्वादिदुरन्तस्थादुष्टदुष्कालरात्रिप्रचारः करुणार्द्रचित्तश्रीगुरुदत्तदीक्षैकदिनपालनानुमोदनादिपूर्वभवः श्रीसंप्रतिभूपः सप्तशतसत्रकारान् पृथक् पृथक् देशेषु नानाशनपानखादिमस्वादिमादिप्रभूतभोज्यभोजनदानमनोहरान् दीनदुःस्थितोद्धरणाय वाहयामास। दयादानोपरि श्रीसंप्रतिकुमारपालकथा वाच्या ॥

जीवदया गुणवेलडी रोपी रिसहजिणन्द । श्रावककुलमण्डप चढी सींची कुमरनरिंद ॥ १०७॥

एकादश लक्षाण्यश्वानां गलितं वारि पिबन्ति स्म । एतदधिकारो वाच्यः ॥ अयोध्याप्रवेशे श्रीरामेण संमुखागतमहाजनादिलोकपार्श्वे धान्यस्य कुशलं पृष्टम्। तदा वनवासे श्रीरामोऽन्नाभावात् क्षुधार्त्तोऽभूदिति मनसि विचिन्त्य लोकैः परस्परं संमुखं वीक्ष्य मनाग् जहसे । कियद्दिनानन्तरं रामेण महाजनादिलोकान् भोजनार्थमाहूय रत्नभृतस्थालानि ढौकितानि । तदा लोकैर्विज्ञप्तम्-देव ! नवीना रसवती भोक्तुं न शक्यते, तदा श्रीरामेणोक्तम्--मम पृच्छायां कथं हसिताः ? । ततो भवन्तः शृण्वन्तु--

उत्पत्तिर्दुर्लभा यस्य व्ययो यस्य दिने दिने । सर्वरत्नप्रधानस्य धान्यस्य कुशलं गृहे ? ॥१०८॥

अन्नं वै प्राणिनां प्राणा अन्नमोजः सुखौषधिः । तस्मादन्नसमं रत्नं न भूतं न भाविष्यति ॥१०९॥
पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा ऽभिधीयते ॥११०॥

सर्वस्य गात्रस्य शिरः प्रधानं सर्वेन्द्रियाणां नयनं प्रधानम् ।
सर्वौषधीनामशनं प्रधानं सर्वेषु पेयेषु पयः प्रधानम् ॥१११॥

तुरगशतसहस्रं गोकुलं भूमिदानं कनकरजतपात्रं मेदिनी सागरान्ता ।
सुरपतिरतिमानं कोटिकन्याप्रदानं न हि भवति समानं अन्नदानैः प्रधानम् ॥ ११२ ॥

ददस्वाऽन्नं ददस्वाऽन्नं ददस्वाऽन्नं युधिष्ठिर ! । सद्यस्तुष्टिकरं लोके किं दत्तेनाऽपरेण ते ?॥११३॥

सद्गीतानवगीतरूपरमणीकर्पूरकस्तूरिकाश्रीखण्डागुरुवाजिवारणमणिस्वर्णादिवस्तुव्रजः ।
भोगे यस्य सुखाकरोति विरहे दुःखाकरोत्याङ्गिनां सद्यः प्रीतिकरं तदन्नमनघं यत्नेन देयं बुधैः ॥११४॥

अन्नदानप्रबन्धः। भोजनेष्वपि रङ्गः सद्भोजनेनैव, न तु वस्त्रादिप्रदानैः। लोकोक्तिः-रंग धानि कि पानि ? । तथा अगडूसाधुनाऽपि तोतलकसोलाभिधस्वपितृप्रोक्तं जगऊआ इत्यभिधानं दुष्काले जगज्जनजीवनाऽन्नप्रदानेन सत्यं कृतम् । यथा--पत्तने एकदा साहजगडूर्भोजनार्थमुपविष्टः । तस्मिन्नवसरे कश्चिद् वृद्धः सिद्धपुरुषो गृह-

द्वारे प्राप्तः। मध्याह्नवेलाऽऽगतत्वेनाऽऽदरेण भोजनं कारापितः; स तु यथेष्टं सर्वान्नपरिवेषणेऽपि सर्वपानीयपानेऽपि न तृप्यति स्म। संजातकौतुकेन जगडूसाधुना कारणं पृष्टम्। तेनोक्तम्—अतः परं नीरं धान्यं च नवीनं पञ्चभिर्वर्षैर्द्रक्ष्यते। इत्युक्त्वा तत्क्षणाददृश्यीभूतः सिद्धः। ततस्तेन पञ्चवार्षिकं दुर्भिक्षं ज्ञात्वा सर्वशक्त्या स्ववणिक्पुत्रपार्श्वात् सर्वदेशेषु धान्यसंग्रहः कारितः संजाते रौरवे काले दुष्काले सकललोकसमुद्धाराय।

गुणगणकथास्तावत्तावद् विलासकुतूहलं स्मरपरिचयस्तावत्तावत् त्रपापरिशीलनम्।
वचनरचनास्तावत्तावद् मतिश्च विजृम्भते जठरपिठरी सेयं यावत् कथञ्चन पूरिता ॥ ११५ ॥

इति विचिन्त्य ढिल्लीस्तम्भपुरधवलक्ककाऽणहिल्लपत्तनादिषु द्वादशोत्तरशतसत्रागारानमण्डयत्। तेषु दीनानां यथेच्छं दीयते स्म। दुष्टनृपग्रहणभीत्या रङ्कसत्का एते इति सकलकोष्ठागारेषु नाम दत्तम्। पश्चाद्वडरङ्कत्वं प्रतिपद्य मार्गयित्वा कैश्च न गृहीतम्?। यतः—

किं किं न कयं को को पत्थिओ कह कह न नामियं सीसं। दुब्भरउअरस्स कए किं किं न कयं न कायव्वं? ॥११६॥
अट्ठय मूडसहस्सा वीसलरायस्स बार हम्मीरे। इगवीसा सुरताणे दुब्भिक्खे जगडुसाहुणा दिन्ना ॥११७॥
नउकरवाली मणियडा ते अगीला च्यारि। दानसाल जगडूतणी दीसइ पुहवि मझारि ॥ ११८ ॥

एवंविधावसरे जगडूकीर्त्ति श्रुत्वा स्पर्द्धया वीसलदेवराजेन विश्वलनगरे सत्रागारो मण्डितः । संपत्त्यभावात्तैलं परिवेषयति स्म । तत्र चारणोक्तिः—

वीसलदे विरूउं करइ जगडू कहावइ जी । तुं परीसइ फालिसिउं एउ परीसइ घी ॥ ११९ ॥

तदनु मत्सरं मुक्त्वा जगडूपार्श्वान्निजप्रणामकरणं निषिद्धम्। प्रभाते यत्रोपविश्य दानमण्डपिकायां द्रव्यदानं ददाति जगडूः, तत्र यवनिकां बन्धयति, लज्जया ये कुलीनाः प्रकटं न गृह्णन्ति तेषां दानार्थम् । सलज्जा यवनिकान्तरिताः स्वकरं जगडूअग्रे विस्तारयन्ति । तदनु यथाभाग्यानुसारेण हाटकटङ्कस्पर्द्धकद्रम्मशतद्विशतादि ददाति । अत्रावसरे विसलदेवभूपः स्वभाग्यपरीक्षार्थं वस्त्रादिवेषं परावर्त्यैकाकी निजकरं यवनिकान्तःस्थो धारयामास । जगडूर्नानाप्रकारलक्षणताम्रताकठिनताधनभाग्यसम्पद्यशःसौख्यविद्यादिबहुरेखाङ्कितं तं करं दृष्ट्वा जगज्जनमान्यस्य कस्यापि नरेन्द्रस्य संप्रतीदृशीमवस्थां प्राप्तस्य तथा करोमि यथा यावज्जीवं सुखीस्यादिति विचिन्त्य स्वकराङ्गुलीतो मणिमण्डितमुद्रिका उत्तार्य प्रदत्ता । सत्कौतुकेन भूपेन क्षणं स्थित्वा वामः करो धारितः, तत्रापि द्वितीया मुद्रिका दत्ता । मुद्राद्वयं गृहीत्वा भूपः स्वावासे गतः । द्वितीयदिने जगडूसाधुमाकार्य किमेतदिति दर्शितवान् मुद्रिकाद्वयम् ? । जगडूसाधुनोक्तम्—

सर्वत्र वायसाः कृष्णाः सर्वत्र हरिताः शुकाः । सर्वत्र सुखिनां सौख्यं दुःखं सर्वत्र दुःखिनाम् ॥१२०॥

परिधाप्य हस्तिस्कन्धमारोप्य गृहे प्रेषितः। इत्यनुकम्पादाने सा०जगडूदृष्टान्तः॥ तथा श्रीभीमसाधुनाऽपि लज्जालवो मोदकाँल्लम्भिता निष्कटङ्कपञ्चकमयान् दुःस्थवणिग्गेहेषु। भूयांसः सत्रागाराः पत्तनादिषु प्रारब्धाः। तुरुष्कगलगृहीतसौराष्ट्रादिदेशीयसबालवृद्धलोकाः स्वद्रव्यसमर्पणेन विमोचिताः । वस्त्रद्युम्नशम्बलार्पणेन सौख्यसंपद्रम्या निर्मिताः। इति भीमदयादानम्॥ एकदा राजपाटिकानिर्गतेन श्रीभोजेन चतुष्पथे कणान् विनयन्तं राजशेखरकविं दृष्ट्वा भूपेनोक्तम्—

निअउअरपूरणे असमत्था तेहिं किं नु जायेहिं ? ।

कविनोक्तम्— सुसमत्था वि हु न परोवयारिणो तेहिं वि न किं पि॥ १२१॥

पुनर्नरेशेनोक्तम्—

परपत्थणापवण्णं मा जणणि! जिणेसि एरिसं पुत्तम् ।

कविः— मा उअरे वि धरिज्जसु पत्थिअभंगो कओ जेण ॥ १२२ ॥

तेहिं वि न किंपि भणिए भोजनरिंदेण दाणसूरेण । दिन्नं गामाण सयं एगा कोडी हिरण्णस्स ॥१२३॥

इत्यनुकम्पादानं भोजस्य ॥ तथा श्रीविक्रमादित्यभूपालेनाऽपि सौवर्णपुरुषप्रसादात् पृथ्वी सुवर्णार्पणादनृणीकृता । अद्यापि तस्य संवत्सरः प्रवर्त्तते । एकदा निच्छारके शालिकूरकणाः पतिताः, हस्तिस्कन्धादवतीर्य विक्रमार्केण मस्तके दत्ताः, तदवसरेऽन्नाधिष्ठायिका लक्ष्मीदेवी तुष्टा प्रत्यक्षीभूता वरं वृणु वदन्ती नृपेण लोकानुकम्पया मालवमण्डले दुर्भिक्षपतनाभाववरो मार्गितः, दत्त आचन्द्रार्कम् । अद्यापि दुर्बललोकानां दुष्काले मालवदेश एवाधारः ।

आर्त्ते दर्शनमागते दशशती संभाषणे चायुतं यद्वाचा च हसेऽहमाशु भवता लक्षोऽस्य विश्राण्यताम् ।
निष्काणां परितोषणे मम पुनः कोटिर्मदाज्ञापरा कोशाधीश ! सदेति विक्रमनृपश्चक्रे वदान्यः स्थितिम् ॥१२४॥

किं बहुना——

जं आरुग्गमुदग्गमप्पडिहयं आणेसरत्तं फुडं रूवं अप्पडिरूवमुज्जलतरा कंती धणं जुव्वणं ।
दीहं आउमवञ्चणो परिअणो पुत्ता सुपत्तासया । तं सव्वं सचराचरंमि वि जये नूणं दयाए फलं ॥१२५॥

आयुर्दीर्घतरं वपुर्वरतरं गोत्रं गरीयस्तरं वित्तं भूरितरं बलं बहुतरं स्वामित्वमुच्चैस्तरम् ।
आरोग्यं विगतान्तरं त्रिजगतः श्लाघ्यत्वमल्पेतरं संसाराम्बुनिधिं करोति सुतरं चेतः कृपासंकुलम् ॥१२६॥

अथ चतुर्थमुचितदानम्--अवसरेषु योग्यमभीष्टप्राघूर्णिकदेवगुरुसमागमनप्रासादप्रतिमानिष्पत्तिवर्द्धापनिकादातॄणां काव्यश्लोकसुभाषितविनोदकथादिकथकानां रञ्जितचेतसा यद्दीयते तदुचितदानम् । यथा—चक्रवर्त्तिना प्रतिदिनप्रभातसमयं विहरमाणतीर्थङ्करस्थितिशुद्धिज्ञापकाय वृत्तिर्दीयते प्रतिवर्षम् । यथा—

विती‌उ सुवन्नस्स बारस अद्धं च सयसहस्साइं । तावइयं चिअ कोडी पीईदाणं तु चक्कीणं ॥१२७॥

एअं चेव पमाणं नवरं रययं तु केसवा दिंति । मण्डलीआण सहस्सा वित्ती पीई सयसहस्सा ॥ १२८ ॥

भत्तिविहवाणुरूवं अन्ने वि अ दिंति इब्भमाइआ । सोऊण जिणागमणं उत्तमनिउइएसुं वा ॥ १२९ ॥

देवाणुवित्तिभत्ती पूआथिरकरणसत्तअणुकम्पा । सा उ दयदाणगुणा पभावणा चेव तित्थस्स ॥ १३० ॥

प्रासादनिष्पत्तिगुरुसमागमनवर्द्धापनिकादायकानां श्रीवाग्भटमन्त्रिप्रमुखपुरुषैर्द्वात्रिंशत्कनकजिह्वा दत्ताः; किं बहुना ?। किंचानर्घ्यं यदवसरे दत्तम्--

अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम् । पुनरपि सुलभमम्भो भवति पुरा जलधराभ्युदये ॥१३१॥

करचलुअपाणिएण वि अवसरदिन्नेण मुच्छिओ जीअइ । पच्छा मुआण सुन्दरि ! घडसयदिन्नेण किं तेण?॥१३२॥

नवे ज्वरे वक्ति न भेषजं भिषग् नवं प्लवं क्रामति नैव तारकः ।

नवं कालें ज्ञोऽपि नत्रा रुरुत्सते सतां हि सूतेऽवसरज्ञता यशः ॥ १३३ ॥

गेयं नाट्यं रमा रामा भूषा भक्तं पयः सिता । धत्तेऽनवसरे सर्वं प्रीतिर्वीरुधि पर्शुताम् ॥ १३४ ॥

अश्मा भस्म तृणं तूलं धूली ध्वान्तं शिखी विषम् । भवत्यवसरे वस्तु समस्तं प्रीतिवर्धनम् ॥ १३५ ॥

प्रातर्भूमानिवोदेति भास्वान् भित्त्वा तमांस्यहो ! । काले तमस्सु पुष्टेषु सोऽपि नश्यति चौरवत् ॥१३६॥

दृष्टान्तो यथा——पाटलीपुरे पङ्कप्रियकुम्भकारेण ईर्ष्यया नगरं परित्यज्याऽरण्यस्थमहातटाकपालिकृत-कुटीरोषितेनाऽश्वापहृततृषाक्रान्तनरवाहनभूपं स्वच्छशीतलसुगन्धपानीयेन सन्तोष्य वस्त्रताम्बूलवासग्राम-ग्रासाश्वसुखासनवाहनादिभोगसामग्री प्राप्ता ।

कल्लिहिं बोर जि वीणती अज्ज न जाणइ खक्ख । पुणरवि अडविहिं करी सुघर न सहुं एह अणक्ख ॥१३७॥

प्रसिद्धा कथेयम् ॥ तथाऽन्योक्त्यादिसुभाषितकथकाय यद्दीयते, तदप्युचितदानम्। दृष्टान्तो यथा--एकदा नन्दपद्रपुराधिपशक्तिसिंहनृपतिसुतो मुञ्जलराजः वाहकेलीं निर्गतः कृपणः वटवृक्षाधः श्रान्तः समुत्तीर्णः । मार्गणार्थागतासन्नोपविष्टगोपालनायकभट्टः भूपप्रतिबोधाय वटवृक्षं प्रत्यन्योक्तिमाह----

भूमीगुणेण जइ कहवि तुंगिमा तुज्झ होइ ता होउ । तह तुह फलाण रिद्धी होही बीआणुसारेण ॥१३८॥

वटवृक्षवद्विस्तीर्णस्यापि दानं भिल्लकुलानुसारेणैव तेऽस्ति इत्यर्थवाचकगाथावेधितश्चमत्कृतः—
स श्रीमुञ्जलराजस्तुष्टो गोपालनायकाय ददौ । नवरङ्गतिलङ्गपटीं तरङ्गरङ्गत्तुरङ्गवतीम् ॥ १३९ ॥
अल्पदानात् पुनर्वटं प्रत्यन्योक्तिमाह—
वडविडवि किं न लज्जसि गरुओ तुच्छं फलं समप्पन्तो ?। ओ दुब्बलकोहलया वुड्ढं वुड्ढं फलं देइ ॥१४०॥
ततस्तिलङ्गपटीस्थचित्रतुरङ्गमसङ्ख्यका मन्दुरातश्छोटयित्वा दत्तास्तुरङ्गमाः । ततो भोजनाय स्वगृहे आकारितः, तव भिल्लवंशोद्भवस्याऽहं विप्रः कथं गृहे आगच्छामि ?। बलादानीतः। सुवर्णस्थाले हीराऽऽमलकप्रमाण-मौक्तिकानि कूरस्थाने, नीलचूर्णिका हाटकटङ्ककाश्च दालिस्थाने, सिन्दूरसो घृतस्थाने, कनकघटयो वटकस्थाने, रूप्यटङ्काः करम्भस्थाने दत्ताः । तदनु स्वर्णतारीपट्टकूलयवकबाहिझूर्णकादिवस्त्रनिकराश्च । ततः सन्तुष्टेनोक्तं गोपालेन—मया तुभ्यं दक्षिणकरः प्रदत्तः। इत्युक्त्वा चलितः । ढिल्ल्यां प्राप्तः। पीरोजपातसाहस्य मिलितः। कलाञ्जितः सुरत्राणो दानं ददाति। स वामहस्तं धराति। तेन वामकरधरणकारणं पृष्टम्। स आह—मद्दक्षिणकरः संरुद्धः श्रीमुञ्जलराजेन। ततः परिधाप्य विसर्जितश्च ॥ तथा सिन्धूभूपालः स्वकृतपादद्वयसमस्यापूरणे सर्वाङ्ग-शृङ्गारं रत्नमुद्रादिकं श्रीपालकवये ददौ ।

वर्षाकाले पयोराशिः कथं गर्जितवर्जितः ? । अन्तःसुप्तजगन्नाथनिद्राभङ्गभयादिव ॥ १४१ ॥

तथैकदा जीर्णदुर्गाधिपखङ्गाराभिधभूपेन आखेटकचटितेन तुरङ्गमपुच्छबन्धितमारितशशकानिवहेन मार्ग-परिवारभ्रष्टेन बब्बूलतरुशाखारूढङ्गमणाभिधचारणपार्श्वे पृष्टम्--भोः! वेत्सि प्राध्वरमार्गम्?। सकारुणिकेनोक्तं तेन-

जीव वधन्तां नरय गइ अवधन्तां गइ सग्गि । हुं जाणुं दुइ वट्टडी जिणि भावै तिणि लग्गि ॥१४२॥

वेधकदुग्धघटश्रवणसमुत्पन्नविवेकेन यावज्जीवं जीववधनियमो गृहीतः। अश्वग्रामप्रदानैश्चारणो धर्म-मार्गप्रकाशकत्वाद् गुरुवत् पूजितः। इत्युचितदाने खङ्गारनृपोदाहरणम् ॥ एकदा नन्दपद्रे कृष्णर्षीयश्रीजयसिंहसूर-यश्चतुर्मासीं स्थिता अभूवन् । तत्र सेवडाषण्डबिरुदं बिभ्राणः समागतो गोपालनाथभट्टः। शक्तिसिंहनृप-सभायां आचार्या आकारिताः क्षुल्लकानां व्याकरणं पाठयन्तः हस्तस्थितलोहवर्त्तनकाः प्राप्ताः । नृपेणोक्तम्-किमिदं करे?। तैरभाणि--सेवडाषण्डस्य कुषण्डस्य नाथनार्थं लोहकीलिका। वादे भग्नो भट्टः। परित्यक्तं सभासमक्षं बिरुदम्। तुष्टेन नरेन्द्रेण महती जिनशासनप्रभावना कृता सङ्घपरिधापनपूर्वम्। एकदा स्तम्भपुरे केऽपि सितपटा झोटिङ्गभट्टेन मलिककबीरदीनपार्श्वे आकारिताः। निस्सङ्गनिरीहत्वेनाऽऽसनादिदानेऽपि भूमावुपविष्टाः। भट्टः कथ-यति--खुन्द! सितपटाः कर्त्तारं न मानयन्ति। यतिभिरुक्तम्--पठ क्षुल्लक! कर्तृशब्दं यथा-कर्त्ता कर्त्तारौ कर्त्तारः कर्तारं

कर्तारौ। तुष्टेन प्रतिष्ठानिवहस्तेषामग्रे ढौकितः। निर्लोभत्वान्न गृहीतः। भट्टो निष्कासितः। महती प्रभावना जाता। यावज्जीवं यवनो जिनधर्मसानुकूलः समजानि ॥ तथा--उज्जयिन्यामेकदा सिद्धसेनाचार्याणां प्रवेशोत्सवे जायमाने तदवसरराजपाटिकानिर्गतश्रीविक्रमादित्यनरेन्द्रेण कलिकालसर्वज्ञसर्वज्ञपुत्रादिसूरिबिरुदवृन्दं जैनभट्टपठ्यमानं श्रुत्वा तत्परीक्षार्थं मनसा प्रणामश्चक्रे। आचार्यैर्धर्मलाभो दत्तः। नरेन्द्रेणोक्तम्-किमधिका धर्माशीः?,यत् प्रणामं विनापि दीयते। तैरुक्तम्--प्रणामस्त्रिविधः--मनोवाक्कायरूपः, त्वया मानसिकः कृतः, इत्युक्ते प्राह तुष्टः सन्-किं भवति धर्मलाभाशीर्वादेन ?। सूरिराह--

दुर्वारा वारणेन्द्रा जितपवनजवा वाजिनः स्यन्दनौघा लीलावत्यो युवत्यः प्रचलितचमरैर्भूषिता राज्यलक्ष्मीः।
उच्चैः श्वेतातपत्रं चतुरुदधितटीसङ्कटा मेदिनीयं प्राप्यन्ते यत्प्रभावात् त्रिभुवनविजयी सोऽस्तु ते धर्मलाभः ॥१४३॥

दीर्घायुर्भव भण्यते यदि पुनस्तन्नारकाणामपि सौख्यार्थं धनवान् भवेद्यदि पुनस्तद् म्लेच्छकानामपि।
संतानाय च पुत्रवान् भव पुनस्तत् कुर्कुटानामपि तस्मात् सर्वसुखप्रदोऽस्तु भवतां श्रीधर्मलाभः श्रिये ॥१४४॥

ततो राजा हस्तिस्कन्धादवरुह्य ववन्दे, कनककोटिं चानाययत्। आचार्यैरुक्तम्--

भुञ्जीमहि वयं भैक्षं शीर्णं वासो वसीमहि। शयीमहि महीपीठे कुर्वीमहि किमीश्वरैः ?॥१४५॥

निर्लोभत्वादाचार्यो न जगृहे, राजाऽपि न जगृहे, कल्पितत्वात्। ततः कनककोटी सा सूरेरनुज्ञया जीर्णोद्धारे संघप्रधानपुरुषैः कृतार्थीकृता ।

धर्मलाभ इति प्रोक्ते दूरादुच्छ्रितपाणये । सूरये सिद्धसेनाय ददौ कोटिं नराधिपः ॥ १४६ ॥

इति विक्रमादित्योचितदानम् ॥ तथैकदा वसन्तसमये लीलोद्यानवने क्रीडां कर्तुं विक्रमार्कः सपरिकरः जग्मिवान्। तत्र च नारीकुञ्जरक्रीडासुखमनुभूय मानिनीजनमनोजीवनसुदलकदलीवनखण्डमण्डितमण्डपान्तः-कनकमयसिंहासनस्थितः षट्त्रिंशद्राजपात्रप्रपञ्चितचारुतरगीतनृत्यवादित्रलीयमानदत्तावधानः सहर्षः संसार-सुखातिरेकरसिकः काव्यमिदं सगर्वः वारं वारं पापठीति । यथा--

क्वचिद् वीणावेणुप्रवणरमणीगीतभणितिः क्वचिद् भट्टश्रेणी पठति बिरुदालीमविरतम् ।
सहर्षं हेषन्ते क्वचिदपि हया दन्तिनिवहा नदन्ति क्ष्मान्तर्न प्रवरमपरं राज्यसदृशम् ॥ १४७ ॥

एतत्संमोहापोहाय स्पष्टमाचष्टे परिवारादिष्टो धर्माधिकारी सज्जनः-- हे राजन् ! श्रीविक्रमार्क !

किं राज्येन धनेन धान्यनिचयैर्देहस्य सद्रूपणैः पाण्डित्येन भुजाबलेन महता वाचां पटुत्वेन च ।
जात्याऽप्युत्तमया कुलेन शुचिना शुभ्रैर्गुणानां गणैरात्मा चेन्न विमोचितोऽतिगहनात् संसारकारागृहात् ? ॥ १४८॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् ? ।
संप्रीणिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥ १४९ ॥
भव्यं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं कौपीनं वा ततः किं दशशतगुणितं पट्टकूलं ततः किम् ? ।
भूमौ सुप्तं ततः किं कुसुमरचितया शय्यया वा ततः किमेको भ्रान्तस्ततः किं करितुरगनरैरावृतो वा ततः किम् ?॥१५०॥
भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं दास्ये स्वामिभयं जये रिपुभयं वंशे कुयोषिद्भयम् ।
माने म्लानिभयं गुणे खलभयं देहे कृतान्ताद् भयं सर्वं नाम भयं सखे ! भज ततो वैराग्यमेवाऽभयम् ॥१५१॥
धर्माधिकारिणा । यतः—

वैराग्यवान् राजा प्राह—अहो ! युक्तमुक्तं

अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया वियोगे को भेदस्त्यजति न जनो यत् स्वयममून् ? ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १५२ ॥
भ्रमद्भ्रूपाठीने कुचनिचयशेवालजटिले लसत्कर्णावर्त्ते स्फुरदमलनेत्रोत्पलदले ।
पिबत्यायुर्नीरं दिवसरजनीपाणिपिटके करालः कालोऽयं सततत्तृषितः कायसरसि ॥ १५३ ॥
आयुर्नीरतरङ्गभङ्गुरमिदं ज्ञात्वा सुखेनाऽऽसितं लक्ष्मीः स्वप्नविनश्वरीति सततं भोगेषु बद्धा रुचिः ।

अभ्रस्तम्बविडम्बि यौवनमिति प्रेम्णाऽवगूढाः स्त्रियो यैरेवाऽत्र विमुच्यते भवरसात् तैरेव बद्धो जनः ॥१५४॥

इत्यादि संसारासारतां भावयन् धर्माधिकारिणे पारितोषिकमदात्——

अष्टौ कोटीः सुवर्णानां शासनानि च षोडश । श्रीविक्रमनृपस्तुष्टो ददौ धर्माधिकारिणे ॥ १५५ ॥

इति श्रीविक्रमादित्योचितदानम् । इत्याद्यनेकदृष्टान्ताः स्वयमुचितदाने वाच्याः॥ अथ पञ्चमं कीर्त्तिदानम्—तच्च विद्वदङ्गनानामाबालगोपालादीनां पशूनामपि च प्रियम् । यथा—

गेयं भोज्यं सुवचनं कामिनी काञ्चनं कथा । विशेषज्ञाविशेषज्ञसाधारणसुखानि षट् ॥ १५६ ॥

कीर्त्त्या निजकुलरूपवंशविद्यागुणवर्णनरूपया भट्टचारणमल्लगन्धर्वमार्गणादीनां यद् दीयते तत् कीर्त्तिदानम्। यथा——'सोनाजलहर कूरसागर कडाहिसमुद्र शालिसमुद्र वाहणवरिस दारिद्र्यमुद्राविहंडणहार विहिलिखिताक्षरमींटणहार पञ्चार्णवादिसंवच्छरमुद्रांकणहार अछतिनाविक्रमादित्य त्रिमणिभोज जगज्जीवजीवनजीमूतवाहन दूबलांमुहसाल दूबलांपीहर सकलजीवलोककनकधाराप्रवाह ऋणमोक्षणकामधेनु दीनोद्धरणधीर दुस्समयसावधान छत्रीसवेलाउलविख्यात अष्टादशवर्णपारिजात विषमदुष्कालजांतूआर इति दातृबिरुदानि । तथा भोगपुरन्दर सौभाग्यसुन्दर ज़बाधिज़लधर ताम्बूलसनागर बींडीवइरागर मानिनीमनोहर लीला-

अलवेसर ललितगर्भेश्वर लीलाशालिभद्रेत्यादि भोगिबिरुदानि । तथा एकाङ्गवरवीर रणाङ्गणधीर पराक्रमनिर्भ-
यभीम साहसिकसीम विषमधाडिमोडणपञ्चाणण परभूमिपञ्चाणण परदलखंडण भडवायभडकोडिभञ्जन
अगंजगंजण रढरावण अरिदलऐरावण अहंकारीमानमोडण अहंकाररावण मूंछालावीरमाणखंडण शरणा-
गतवज्रपंजर गढभंजनकुंजर अडवड्यांआधार वांकावीरपधोरणहार सीकरिघोरंधार विकटपरभटाहंकारधिक्कार
कलंकियांकेदार पवाडाकोडिजइतूआर रणरंगमल्ल अरडक्कमल्ल वीरटोडरमल्ल परधीरवीरहृदयसल्ल बावन्नवीर-
कटारमल्ल भालेभयंकर करालकरवालतरलधाराधर रणरंगभग्गसुहडावटंभनमेरु साहणसमुद्रविलोडनमंथाण-
मेरु वीरकङ्कालवेतालकाल चमरबंबाल परदलहल्लकल्लोल परदलद्रहबोल भयभीतभडकोडिरक्षावज्रकमाड
रणाङ्गणभिडकमाड गयघडाविभाड नीसाणनिसंक रिपुरायतारामयंक रिपुकीर्त्तिलङ्काहनूमन्त घयवडघटाटोप
इति नृपतिबिरुदानि । तथा सुरताणसनाखत दीवाणदीपक अश्वपतिगजपतिनरपतिरायस्थापनाचार्य
राजसभालङ्कार राजसूत्रसौधसूत्रधार रायसाधार रायबंदछोड राजवाल्हेसर मर्यादामयरहर परनारीसहोदर कलि-
कालनिष्कलङ्क विचारचतुर्मुख रूपरेखामकरध्वज वज्राङ्कभालस्थल चतुष्पथचिन्तामणि वाचाअविचल
बालधवल शीलगङ्गाजल गोत्रवाराह शीलगाङ्गेय उभयकुलविशुद्ध एकोत्तरशतकुलोद्द्योतकारक उभयपक्ष-

निर्मल राजहंसावतार हर्षवदन सत्यवाचायुधिष्ठिर इति व्यवहारिमन्त्रिविरुदानि। चउदविद्यानिधान समस्या-सत्रकार षड्भाषाचक्रवर्त्ति जाणरायभरताचार्य कलिकालसर्वज्ञ कूर्चालसरस्वती सरस्वतीधर्मपुत्र प्रत्यक्षबृहस्पति सरस्वतीकण्ठाभरण वादिविभाड कविकामधेनु' इत्यादिविविधगुणवर्णनोत्साहिताः कीर्त्यभिलाषिणः दानव्य-सनवासितचेतसः सर्वस्वमपि ददति पुरुषाः। कीर्त्तिदानोदाहरणानि यथा—एकदा विक्रमार्कः सर्वावसरमण्ड-पोपविष्टस्तृषाकुलो जातः, जलममार्गयत्। यथा—

स्वच्छं सज्जनचित्तवल्लघुतरं दीनार्थिवच्छीतलं पुत्रालिङ्गनवत् तथा च मधुरं बालस्य संजल्पवत्।
एलोशीरलवङ्गचन्दनलसत्कर्पूरपालीमिलत्पाटल्युत्पलकेतकीसुरभितं पानीयमानीयताम्॥ १५७॥

ततो मन्त्रिणा सजलकनककच्चोलके आनीते वैतालिक उवाच—

वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः।
वाहिन्यः पार्श्वमेताः कथमपि भवतो नैव मुञ्चन्त्यजस्रं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते! तेऽम्बुपानाभिलाषः?॥ १५८॥

ततस्तुष्टेन भूपेन पाण्ड्यनृपदण्डागतप्राभृतं दत्तम्--

अष्टौ हाटककोटयस्त्रिनवतिर्मुक्ताफलानां तुला पञ्चाशद् मधुगन्धलुब्धमधुपक्रोधोद्धुराः सिन्धुराः ।
अश्वानामयुतं प्रपञ्चचतुरं पण्याङ्गनानां शतं दण्डे पाण्ड्यनृपेण ढौकितमिदं वैतालिकस्याऽर्पितम् ॥ १५९ ॥

एकदा देवतावसरे श्रीविक्रमेण किञ्चिन्मालिन्यधौतवस्त्रदर्शने कारणं पृष्टा रजककामिनी जगाद——

याऽऽसीद् दक्षिण ! दक्षिणाऽर्णववधू रेवाप्रतिस्पर्द्धिनी गोविन्दप्रियगोकुला गिरिणदी गोदावरी विश्रुता ।
तस्यां देव ! गतेऽपि मेघसमये स्वच्छं न जातं पयस्त्वद्दण्डद्विरदेन्द्रदन्तमुसलप्रक्षोभितैः पांसुभिः ॥१६०॥

तद्वचोविस्मितस्तस्यै ददौ श्रीविक्रमो नृपः । तानि वस्त्राणि सर्वाणि स्वर्णकोटिं विशेषतः ॥ १६१ ॥

तथैकदा श्रीसिद्धसेनदिवाकरा विहरन्तोऽवन्तीपुरीमागताः । तदा श्रीसङ्घेन विज्ञप्तम्--भगवन् ! भवतां विद्या प्रमाणं तदा, यदि राजानं रञ्जयित्वोङ्कारनगरे ब्राह्मणैः कर्तुमदीयमानं जिनप्रासादं कारयत । ततः सिद्धसेनसूरयः राजानं मिमिलिषवः कृतनवीनचतुःश्लोकाः प्रतोलीं प्रापुः । द्वारपालः प्रवेष्टुं न दत्ते स्म, तदा गुरुभिः--

दिदृक्षुर्भिक्षुरेकोऽस्ति वारितो द्वारि तिष्ठति । हस्तन्यस्तचतुःश्लोकः किंवाऽऽगच्छतु गच्छतु ? ॥ १६२ ॥

इति श्लोको विक्रमपुरतः प्रतीहारपार्श्वाद् भाणितः । राजाऽपि श्लोकं श्रुत्वा सानुप्रासपदबन्धचमत्कृतः प्रत्याह--

दीयन्तां दश लक्षाणि शासनानि चतुर्दश । हस्तन्यस्तचतुःश्लोको यद्वाऽऽगच्छतु गच्छतु ॥ १६३ ॥

ततः श्लोकमेनं श्रुत्वा नास्माकं लक्षैश्च ग्रामैश्च प्रयोजनं, इत्युक्त्वा सिद्धसेनो राजसभायां गत्वा चतुर्द्वार-सिंहासने पूर्वदिग्भागमध्यासीनं श्रीविक्रमार्कमवलोक्य श्लोकमेतं पपाठ । यथा--

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ? । मार्गणौघः समभ्येति गुणो याति दिगन्तरम् ॥१६४॥

ततो राजा पूर्वं सिंहासनं मुक्त्वा दक्षिणसिंहासनमलंचकार । तत्र सूरिर्द्वितीयश्लोकमपठत् । यथा--

सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे बुधैः । नाऽरयो लेभिरे पृष्ठं न चक्षुः परयोषितः ॥ १६५ ॥

ततः पश्चिमसिंहासनमधितष्ठौ, सूरिस्तृतीयश्लोकं पठितवान् । यथा--

आहते तव निःस्वाने स्फुटितं रिपुहृद्धटैः । गलिते तत्प्रियानेत्रे राजंश्चित्रमिदं महत् ॥ १६६ ॥

तत उत्तरसिंहासनमध्यातिष्ठत् । सूरिश्चतुर्थं श्लोकं जगाद । यथा--

सरस्वती स्थिता वक्त्रे लक्ष्मीः करसरोरुहे । कीर्त्तिः किं कुपिता राजन् ! येन देशान्तरं गता ? ॥ १६७ ॥

तच्छ्लोकचतुष्कमाकर्ण्य श्रीविक्रमः सिंहासनादुत्थाय श्रीसिद्धसेनसूरिं प्रणम्याह--हे भगवन् ! दत्तं मया भवतां चतुर्दिग्राज्यम् । ततः सूरिः प्राह--हे श्रीविक्रमार्क ! समतृणमणिलोष्टकाञ्चनानां किमस्माकं राज्येन ? ।

यतः—

पद्भ्यामध्वनि संचरेय विरसं भुञ्जीय भैक्षं सकृज्जीर्णं सिग् निवसीय भूमिवलये रात्रौ शयीय क्षणम् ।
निस्सङ्गत्वमधिश्रयेय समतामुल्लासयेयाऽनिशं ज्योतिस्तत् परमं दधीय हृदये कुर्वीय किं भूभुजा ? ॥१६८॥
पद्भ्यां गलदुपानद्भ्यां संचरन्तेऽत्र ये दिवा । चारित्रिणस्त एव स्युर्न परे यानयायिनः ॥ १६९ ॥

केशोत्तारणमल्पमल्पमशनं निर्व्यञ्जनं भोजनं निद्रावर्जनमह्नि मज्जनविधित्यागश्च भोगश्च न ।
पानं संस्कृतपाथसामविरतं येषां किलेत्थं क्रिया तेषां कर्ममयामयः स्फुटमयं स्पष्टोऽपि हि क्षीयते ॥१७०॥

इत्यादि स्वाचारप्रकटीकरणेऽपि राजा राज्याङ्गीकारं विना गुरुचरणारविन्दं न त्यजति स्म । तदा गुरुभिर-भाणि—राजन् ! भव्यभोजनमपि न रोचतेऽस्माकं, राज्येन किं क्रियते ? । यतः—

शमसुखशीलितमनसामशनमपि द्वेषमेति किमु कामाः ? ।
स्थलमपि दहति झषानां किमङ्ग ! पुनरुज्ज्वलो वह्निः ? ॥१७१॥

तथा संयमसाम्राज्यतुलां राज्यं नाञ्चति । यतः—

नो दुष्कर्मप्रयासो न कुयुवतिसुतस्वामिदुर्वाक्यदुःखं राजादौ न प्रणामोऽशनवसनधनस्थानचिन्ता न चैव ।

ज्ञानासिर्लोकपूजा प्रशमसुखरसः प्रेत्य नाकाद्यवाप्तिः श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयस्तत्र यत्नं कुरुध्वम् ॥१७२॥

राज्यं तु नरकान्तमेव महामोहोदयात् । यदुक्तम्—

हयहेषितगजगर्जितसुभटभुजास्फोटतूर्यनिर्घोषैः । कुतुकं वनितावाग्भिर्भृशायते मोहनिद्रेयम् ॥ १७३ ॥

इत्यादिसरसस्वाचारसंसूचककाव्यरञ्जितः श्रीविक्रमार्कः सुश्रावकः प्रभावकः श्रीशत्रुञ्जयोद्धारादिपुण्यकरणीयकारकः यावज्जीवं श्रीसिद्धसेनचरणारविन्दरेणुमकरन्दरोलम्बः समभूत् । तत ओङ्कारनगरादिषु सर्वत्र प्रासादा निष्पन्नाः । इति विक्रमादित्यकीर्त्तिदानप्रबन्धः । तथा प्रतिष्ठानपुराधिपो द्वापञ्चाशद्वीरवन्द्यपादः शत्रुञ्जयोद्धारकारकविद्यालयादिगाथाकोशप्रवर्त्तकः शातवाहननृपः ।

सच्चं भण गोदावरि ! पुव्वसमुद्देण साहिआ सन्ती । सालाहणसारिच्छं किं ते तीरे कुलं अत्थि? ॥१७४॥

उत्तरओ हिमवन्तो दाहिणओ सालवाहणो राया । समभारभरक्कन्ता तेण न पल्हत्थए पुहवी ॥ १७५ ॥

इत्यादिगाथाकारकाणां घनमपि धनं ददौ । तथा धारानगरीधराधिपः श्रीभोजराजः कालिदासवररुचिमयूरबाणकर्पूरक्रीडाचन्द्रराजशेखरप्रमुखपञ्चशतपण्डितानां स्तूयमानगुणगणानां कनककोटिगजतुरगशतग्रामसहस्रादि साम्राज्यं ददौ । सर्वेऽपि प्रबन्धाः प्रबन्धचिन्तामणितो ज्ञेयाः । श्रीभोजो धनपालस्य चक्षुषी ददौ ।

यथा--सर्वदेवद्विजसुतः पण्डितधनपालो लघुभ्रातृशोभनसाधुप्रतिबोधितः परमार्हतः समजनि ।

सव्वत्थ अत्थि धम्मो जा मुणिअं न जिणसासणं तुम्ह । कणगाउराण कणगं व ससिअपयमलभमाणाणं ॥१७६॥

इत्यादि जिनधर्मस्थापकः । एकदा नृपेण भोजेनाऽऽखेटके बलात्कारेण सहाऽऽकारितः, वने बाणेनैणे विद्धे भूमौ पतिते सति भूमिस्पृशं पुच्छं वीक्ष्य धनपालं प्राह--किं कारणम् ? । ततः पण्डितधनपालश्चाह--

रसातलं यातु तदत्र पौरुषं कुनीतिरेषाऽशरणो ह्यदोषवान् ।
निहन्यते यद् बलिनाऽतिदुर्बलो हहा ! महाकष्टमराजकं जगत् ॥ १७७ ॥
पदे पदे सन्ति भटा रणोत्कटा न तेषु हिंसारस एष पूर्यते ।
धिगीदृशं ते नृपते ! कुविक्रमं कृपाश्रये यः कृपणे मृगे मयि ॥ १७८ ॥

अपि च--

वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् । तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ? ॥ १७९ ॥

इति तन्निर्भर्त्सनात् क्रुद्धो नृपः । अपरे बाणादयस्त्वेवं पठन्ति--

किं कारणं नु कविराज ! मृगा यदेते व्योम्न्युत्पतन्ति विलिखन्ति भुवं वराहाः ? ।

देव ! त्वदस्त्रचकिताः श्रयितुं स्वजातिमेके मृगाङ्कमृगमादिवराहमन्ये ॥ १८० ॥

पश्चाद् वलमानः स्वकारितसरस्तीरमुपागतः सरोवर्णनाय धनपालं प्रत्याह ।

एषा तटाकमिषतो वरदानशाला मत्स्यादयो रसवती प्रगुणा सदैव ।
पात्राणि यत्र बकसारसचक्रवाकाः पुण्यं कियद् भवति तत्र वयं न विद्मः ? ॥ १८१ ॥

तत्रापि क्रुद्धः पुरं प्रत्यागच्छन् यज्ञमण्डपे यज्ञस्तम्भानियन्त्रितच्छागस्य दीनां गिरमाकर्ण्य किं पशुरसौ व्याहरतीति व्यादिष्टः श्रीधनपालः प्राह--

नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया संतुष्टस्तृणभक्षणेन सततं साधो ! न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यागे ध्रुवं प्राणिनो यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ? ॥१८२॥

ततो रुष्टेन भोजेन धनपाललोचने क्रष्टुं चिन्तिते । पण्डितेन चेष्टया ज्ञातम् । तदनु प्रतोल्यां प्रविशाता नृपेण बालिकापृष्णिलग्नां वार्द्धकदोधूयमानमूर्द्धानं वृद्धामेकामागच्छन्तीं दृष्ट्वा धनपालः प्राह--स्वामिन् ! एषा शीर्षधूननेन बालिकायाः पृच्छत्या निषेधं कुर्वत्यस्ति । कथमिति नृपतिपृष्टः प्राह--

किं नन्दी किं मुरारिः किमुत सुरपतिः किं नलः किं कुबेरः

किं वा विद्याधरोऽसौ किमु रतिरमणः किं विधुः किं विधाता ? ।
नायं नायं न चायं न खलु न हि नवा नापि नासौ न चैष
क्रीडां कर्तुं प्रवृत्तः स्वयमिह हि हले ! भूपतिर्भोजदेवः ॥ १८३ ॥

राज्ञा पृष्टम्—मुरारिप्रभृत्युपमानानि मम कथं शोभन्ते ? । पण्डितेनोक्तं शृणु——

अभ्युद्धृता वसुमती दलितं रिपूरः क्रोडीकृता बलवता बलिराज्यलक्ष्मीः ।
एकत्र जन्मनि कृतं तदनेन यूना जन्मत्रये यदकरोत् पुरुषः पुराणः ॥ १८४ ॥

ततस्तुष्टो भोजः प्राह—वरं वृणु । धनपालेनोक्तम्—चक्षुषी देहि। राज्ञोक्तम्—ते पुराऽपि स्तः । तेनोक्तम्—ते सती अप्यसती । कुतः ? । त्वया ते मनसा गृहीते । कथं ज्ञायते ?——

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ १८५ ॥

तर्हि स्वस्थो भव, दत्ते लोचने; इत्यादि महाप्रसादः कृतः पण्डितधनपालस्य ।

श्रीभोजेन जितोऽस्मीति चिन्तां चिन्तामणे ! त्यज । जिता देवद्रुमाः पञ्च न दुःखं पञ्चभिः सह ॥१८६॥

भोज ! त्वामसमानदानविहितैरर्थैः कृतार्थीकृतत्रैलोक्यं फलभारभङ्गुरशिराः कल्पद्रुमो निन्दति ।

टङ्कच्छेदनवेदनाविरमणात् संजातसौख्यस्थितिः प्राचीनव्रणिताङ्गरोहणतया श्रीरोहणः स्तौति च ॥ १८७ ॥
नो शृङ्गारकथा कुतूहलकथा गीतादिविद्याकथा माद्यत्कुम्भिकथा तुरङ्गमकथा कोदण्डशिक्षाकथा ।
एकैवाऽस्ति परं पलायनकथा त्वद्भीतभूमीभुजां भोज ! श्रीरणरङ्गमल्ल ! भवति स्वप्नेऽपि नान्या कथा ॥१८८॥

विद्वन् ! वद क चलितोऽसि ?, समग्रविद्यापारङ्गतं कलयितुं किल भोजराजम् ।
वेत्त्यक्षराणि न हि वाचयितुं स राजा मह्यं ललाटलिखितादधिकं ददौ यत् ॥१८९॥

कविषु कामिषु योगिषु भोगिषु द्रविणदेषु जितारिषु साधुषु ।
धनिषु धन्विषु धर्मधनेषु च क्षितितले न हि भोजसमो नृपः ॥ १९० ॥

भोजराज गलिकंठलउ कहि किसिउ पडिहाइ। उरि लच्छी मुहि सरसई सीमविहं विअराइ ॥१९१॥
कूआकण्ठइ सत्थरउ उरि जनोई गलि हत्थ । तइ रुठइ धारह धणी वयरी एह अवत्थ ॥ १९२ ॥

इत्यादिभोजकीर्त्तिकवित्वप्रबन्धाः कीर्त्तिदानोपरि वाच्याः ७२प्रबन्धेभ्यः ॥ तथा रैवतोद्धारकारकश्री-सज्जनदण्डनायक २४ प्रासादकारक मं०आभट देवगुरुदृढभक्त मं० आलिग मं० सांतू ९९लक्षहाटकस्वामी श्रे०छाडा षट्कोटिद्रव्यस्वामिकुबेरदत्तादिकोटीध्वजाष्टादशशतव्यवहारिशाकम्भरीपतिअर्णोराजलाटाधिपगज-

मांगूझालकप्रभृति ७२ राणकपरिकरितश्रीजयसिंहदेवेन ग्रीष्मे क्रीडोद्यानं गतेन मार्गमिलितश्रीरामचन्द्रक्षुल्लः पृष्टः--कथं ग्रीष्मे दिवसा गुरुतराः ? । रामचन्द्रः प्राह--

देव ! श्रीगिरिदुर्गमल्ल ! भवतो दिग्जैत्रयात्रोत्सवे धावद्वीरतुरङ्गनिष्ठुरखुरक्षुण्णक्ष्मामण्डलात् ।
वातोद्धूतरजोमिलत्सुरसरित्संजातपङ्कस्थलीदूर्वाचुम्बनचञ्चुरा रविहयास्तेनाऽतिवृद्धं दिनम् ॥१९३॥

चमत्कृतेन सिद्धराजेनोक्तम्--सद्यो नगरं वर्णय पत्तनाभिधानम् ।

एतस्यास्य पुरस्य पौरवनिताचातुर्यतानिर्जिता मन्ये नाथ ! सरस्वती जडतया नीरं वहन्ती स्थिता ।
कीर्त्तिस्तम्भमिषोच्चदण्डरुचिरामुत्सृज्य वाहावलीतन्त्रीकां गुरुसिद्धभूपतिसरस्तुम्बीं निजां कच्छपीम् ॥१९४॥

तुष्टेन सर्वसमक्षं कविकटारमल्लेति बिरुदं दत्तम् ॥ एकदा स्तम्भपुरे समुद्रोपकण्ठवर्त्तिनि सिद्धराजे चारणेनोक्तम्--

को जाणइ को नाह चिन्तु तुहारउं चक्कवइ । लहु लंकह लेवाह मग्ग निहालइ करण उत्त ॥ १९५ ॥

द्वितीयेनोक्तम्--धाइ धोयापाय जयसिंह जलनिहि ताह । रातइ गाहिआ सविराय इक्क बिभीषण मिल्हिमह ॥१९६॥

द्वयोः सहस्रदानम् ।

सो जयउ कूडगंछो तिहुअणमज्झंमि जेसलनरिन्दो । छित्तूण रायवंसे इक्कं छत्तं कयं जेण ॥ १९७ ॥

वराश्वदानम् ।

महालयो महायात्रा महास्थानं महासरः । यत्कृतं सिद्धराजेन तत्कृतं केन न क्वचित् ॥ १९८ ॥

एकैव जगृहे धारा नगरी नरवर्मणा । दत्ता येनाश्रुधारास्तु तद्वधूनां सहस्रधा ॥ १९९ ॥

मात्रयाऽप्यधिकं किञ्चिन्न सहन्ते जिगीषवः । इतीव त्वं धरानाथ ! धारानाथमपाकृथाः ॥२००॥

स्वामिन् ! श्रीजयसिंहदेवनृपते ! सत्यं प्रयाणोत्सवे पानीयाशयशोषणेन सुभटश्रेणीक्षितिप्रासिभिः ।
स्वीयस्वीयपतेर्विनाशसमयं संचिन्त्य चिन्तातुरा मत्सी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः ॥२०१॥

एकदा सभायां सिद्धराजेन स्वमूंछायां करगृहीतायां आमकविः प्राह——

डरि गइन्द डगमगिअ चन्द करमिलिय दिवायर डुल्लिय महि हल्लियह मेरु जलझंपिअ सायर ।
सुहडकोडि थरहरिय क्रूरकूरंम कडक्किअ अनलविनल धसमसिअ पुहवि सहु प्रलय पलट्टिय ।
गज्जंति गयण कवि आम भणि सुरमणि फणमणि इक्कहूअ मागहि हिमगाहिममगहि मगहि मुंच मुंछ जयसिंह तुह २०२

प्रत्यक्षरं हाटकटङ्कका: प्रदत्ताः ।

वरसइं चऊद चुंआल थम्भसइं सतर निरंतर सय पुत्तलीय अढार जडीमणि माणिक रयंवर ।

तीससहस धजदण्ड कलस दससहस्स सुवन्नय छप्पन्नकोडि गयतुरिय लग्ग तिंणि रुद्द महालय ।
कविगद्द सद्द इम ऊचरइ सुरनर रोमञ्चिय सवइ सुपसिद्धिखित्ति जयसिंह किंत्ति टगमग चाहइं चक्कवइ ॥२०३॥

इत्यादिस्ववर्णनकाव्यकृतां श्रीपालादिकवीनां बह्वपि धनं ददौ जयसिंहनृपः ॥ अथ श्रीकुमारपालकीर्तिदानम्—सपादलक्षदेशाधिपतिअर्णोराजं प्रति दिग्विजययात्रायां संचरन् श्रीकुमारपालश्चामरैरश्वपर्याणं प्रमार्जयन् ७२ राणकैः प्रहसितो वणिगेवायं किं करिष्यति संग्रामे ?। ज्ञातसामन्ताशयेन कुमारपालेन पूगीफलगोणी विपणिमार्गे पतिता भल्लाग्रेणोच्छाल्य पतन्ती धृता । रजककटाहकसप्तकं परस्परमध्यस्थितं लोहमयभल्लैकघातेन प्रस्फोटितम्। तदाऽवसरोचितवचनचतुर आमभट्टः प्राह—

रे रक्खइ लहुजीव वडविरणि मयगल मारइ न पीइ अणगल नीर हेलिरायह संहारइ ।
अवर न बंधइ कोइ सघर रयणायर बंधइ परनारी परिहरइ लच्छि पररायह रूंधइ ।
ए कुमरपाल कोपिं चडिउ फोडइ सत्त कडाहि जिम जे जिणधम्म न मन्निसिइं तीहवी चाडिसु तेम तिम ॥२०४॥

तुष्टेन प्रत्यक्षरमश्वाः प्रदत्ताः । रणाङ्गणे स्वसैन्ये अर्णोराजेन बहुद्रव्यार्पणपरावर्तिते भग्ने इव जाते सति चिन्ताऽऽतुरे कुमारपाले चारणोक्तिः—

कुमरपाल! मत चिंतकरि चिंतिउं किंपि न होइ। जिणि तुझ राज समप्पिउं चिन्त करेसि सोइ ॥२०५॥
जयः समजनि।

जीयाच्चिरं कीर्त्तिलतालवालः कुमारपालः क्षितिपालभास्वान्।
यस्य प्रतापः शिशिरेऽप्यरीणां स्वेदोदबिन्दूनधिकांश्चकार ॥ २०६ ॥
युधि स्वयं यः किल जाङ्गलेशं बली विजिग्ये किमु चित्रमत्र।
अनूपभूपो वणिजाऽपि यस्य जितो यतः कौङ्कणचक्रवर्त्ती ॥ २०७ ॥

विहारं कुर्वता वैरिवनिताकुचमण्डलम्। महीमण्डलमुद्दण्डविहारं येन निर्ममे ॥ २०८ ॥
करवालजलैः स्नातां वीराणामेव योऽग्रहीत्। धौतां बाष्पाम्बुधाराभिर्निर्वीराणां तु न श्रियम् ॥२०९॥
शूराणां संमुखान्येव पदानि समरे ददौ। यः पुनस्तत्कलत्रेषु मुखं चक्रे पराङ्मुखम् ॥२१०॥
पादलग्नैर्महीपालैः पशुभिश्च तृणाननैः। यः प्रार्थित इवात्यर्थमहिंसाव्रतमग्रहीत् ॥२११॥
जन्तूनामवनं ससव्यसनानां निषेधनम्। वादनं न्यायघण्टानां रुदतीधनवर्जनम् ॥२१२॥
स्वर्गे न क्षितिमण्डले न वडवावक्त्रे न लेभे स्थितिं त्रैलोक्यैकहितप्रदाऽपि विधुरा दीना दया या चिरम्।

चौलुक्येन कुमारपालविभुना प्रत्यक्षमावासिता निर्भीका निजमानसौकसि वरे केनोपमीयेत सः ? ॥२१३॥
आज्ञावर्त्तिषु मण्डलेषु विपुलेष्वष्टादशस्वादरादब्दान्येव चतुर्दिशं प्रसृमरां मारिं निवार्याऽञ्जसा ।
कीर्त्तिस्तम्भनिभांश्चतुर्दशशतीसंख्यान् विहारांस्तथा क्लृप्त्वा निर्मितवान् कुमारनृपतिर्जैनो निजैनोव्ययम् ॥२१४॥

निष्पुत्रकुबेरदत्तावासे तल्लक्ष्मीविलोकनार्थं गतः, तज्जननीजायाभगिन्यादिकुटुम्बं विलपन्तं दृष्ट्वा सकरुणश्चिन्तितवान्--

दुर्भिक्षोदयमन्नसंग्रहपरः पत्युर्वधं बन्धकी ध्यायत्यर्थपतेर्भिषग् गदगणोत्पातं कलिं नारदः ।
दोषग्राहिजनश्च पश्यति परच्छिद्रं छलं राक्षसी निष्पुत्रं म्रियमाणमाढ्यमवनीपालो हहा ! वाञ्छति ॥२१५॥

इति नृपाशयं ज्ञात्वा रामकपर्दिश्रीपालादिकवयः स्तोतुं प्रवृत्ताः--

भरहसगरसणंकुमारहरियंददहरहनलेहिं । न कयं अमारिकरणं न य केण य मुग्गडं मुक्कं ॥२१६॥
अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः । त्वं तु संतोषतो मुञ्चन् सत्यं राजपितामहः ॥२१७॥
न यद् मुक्तं पूर्वैं रघुनहुषनाभागभरतप्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि ।
विमुञ्चन् कारुण्यात् तदपि रुदतीवित्तमधुना कुमारक्ष्मापाल ! त्वमसि महतां मस्तकमणिः ॥२१८॥

इक्क कन्त मरिजाइ नारि चुकइ आभरणह घटजुअलं अवहारि नारि बोली नीझरणह ।
पयडिय विहवा सद सयल मङ्गल टालिज्जइ मानभंग तस होइ देहदुव्वयणे डज्झइ ।
एतला दंड इकसिरि पडइ अनइ धन जाइ नरिंदघरि कुमर नरिंद रुवन्तीअह लच्छी मुक्कि पसाउ करि॥२१९॥

सकलकवीनां सहस्रटङ्कप्रदानम् ।

चन्दि दीवउ धरणि पल्लंक तृण पूलक संधरइ ईंट खंडउ सींस दीज्जइ ।
महघरि प्रिय न पाहुणउ सज्जण न बारि बइट्ठ तुज्झ पसाइं रंडपण एह अवत्था दिट्ठ॥२२०॥

श्रीहेमामृतधर्नं मुक्तम् । एकदा द्वादशावर्त्तवन्दनकदानावसरे कुमारपालभूपालपृष्ठं क्षामणकवेलायां श्रीहेमाचार्ये करेण स्पृशति गागिलचारणोक्तिः—

हेम तुहारा करमरुं जाह अनंती ऋद्धि । ए चांप्या नींचामुहा तांह ऊपहरि सिद्धि ॥२२१॥

करकटकंप्रदानम् । तथा शालामुखपोतिकाचिन्ताकारिसमरसिंहधार्मिकपञ्चशताश्वश्रेणीं सरसि पानीयपानार्थं गच्छन्तीं दृष्ट्वा हट्टोपविष्टचारणेनोक्तम्—

भल्लउं पारिसनाथ जइ एहवउं जाइसि । सहसिइ सेवडसाथ कुमरनरिंदह बाहिरउ ॥ २२२ ॥

पूर्वं वीरजिनेश्वरेऽपि भगवत्याऽऽख्याति धर्मं स्वयं प्रज्ञावत्यभयेऽपि मन्त्रिणि न यां कर्तुं क्षमः श्रेणिकः ।
अक्लेशेन कुमारपालनृपतिस्तां जीवरक्षां व्यधाल्लब्ध्वा यस्य वचःसुधां स परमः श्रीहेमसूरिप्रभुः ॥२२३॥

तथैकदा श्रीहेमसूरिस्वकरधृतवामकरस्य श्रीकुमारपालस्य श्रीशत्रुञ्जयचैत्यपरिपाट्यां संचरतः कपर्दिकविः प्राह—

श्रीचौलुक्य ! स दक्षिणस्तव करः पूर्वं समासूत्रितप्राणिप्राणविघातपातकसखः शुद्धो जिनेन्द्रार्चनात् ।
वामोऽप्येष तथैव पातकसखः शुद्धिं कथं प्राप्नुयात् न स्पृश्येत करेण चेद् यतिपतेः श्रीहेमचन्द्रप्रभोः ? ॥२२४॥

इत्यादिकवित्वकथककवीनां कुमारपालो घनमपि धनं ददौ । एकदा वीसलदेवेन भोजनान्ते तृणं करे कृत्वाऽरिसिंहोऽभिदधे—इदं तृणं सद्यो वर्णय । यदि रुचितभङ्ग्या वर्णयसि, तदा ग्रासद्वैगुण्यं, अन्यथा सर्वग्रासत्याजनम् । इत्युक्ते स ऊचे—

क्षारोऽब्धिः शिखिनो सखा विषमयं श्वभ्रं क्षयीन्दुर्मुधा प्राहुस्तत्र सुधामियं तु दनुजत्रस्तैव लीना तृणे ।
पीयूषप्रसवो गवां यदशनाद्, दत्त्वा यदाऽऽस्ये निजे देव ! त्वत्करवालकालमुखतो निर्याति जातिर्द्विषाम् ॥२२५॥

चमत्कृतो भूपालो ग्रासद्वैगुण्यं चकार ॥ इति वीसलदेवकीर्त्तिदानम् ॥ एकदा योगिनीपुरतो जल्लालदीनः

सुरत्राणः कटकमादाय गूर्जरधरित्रीं भङ्क्त्वा भृतपूरितः पश्चाद् वलितः सन् गोपगिरिसमीपं प्राप्य सुन्दराशिव-सरोवरपाल्यामुत्तीर्णः । ततत्सैन्यसंनिवेशं ज्ञात्वा गोपगिरिनृपतिराउललाखणसिंहपुत्र उदयसिंहः सन्नद्धं संनह्य तत्रागत्य युद्धं विधाय गूर्जरत्रानीतं पुरातनमश्वादिकमादाय तदश्वं निर्भाल्य स्वपुरं प्रविशन् चारणेन वर्णितः—

सुन्दर सर असुराह दलि जल पीधउं वयणेहिं । उदयनरिन्दहिं कड्ढीउं तीहिं नारीनयणेहिं ॥२२९॥

चारणपठितां गाथां श्रुत्वोदयसिंहेनाऽश्वादिभूषितवस्तुसङ्घातं चारणाय प्रदत्तम् ॥ इत्युदयसिंहकीर्तिदान-प्रबन्धः ॥ एवमपरेषां मुञ्जकर्णवनराजभीमबप्पभट्टिसूरिप्रतिबोधितश्रीआमादिनृपाणां कीर्तिदानप्रबन्धाः स्वयं ज्ञेयाः ॥ अथ मन्त्रिप्रधानादिव्यवहारिणां कीर्त्तिदानप्रबन्धाः--एकदा पत्तने संवननचूर्णाद् वशीभूतात्मभिः कुङ्कुणा-धिपतेर्मल्लिकार्जुनस्य राजपितामहेति बिरुदं बन्दिमुखात् श्रुत्वा क्रुद्धश्रीकुमारपालेन प्रेषितः प्रधानमन्त्रिश्रीआम्बा-डदेवः । ततस्तेन सबलसेनापरिवृतेन संग्रामाङ्गणे तच्छिरो लूनम् । तत्र देशे २०० जालानि ज्वालितानि । सर्वत्र कुमारपालाज्ञा दापिता । ततः सोपारकपत्तने प्राप्तः, तत्र जीवत्स्वामिसुव्रतप्रासादे स्नात्रपूजाध्वजा[illegible]म-होत्सवं कृत्वा तदनु शृङ्गारकोटीशाटी१ माणिक्यपट२ पापक्षयंकरहार ३ विषापहृच्छुक्ति४ १४भारसिता-

धवलगृहशृङ्गस्थ३२हेमकुम्भ षड्मूढकमुक्ताफल १४स्वर्णकोटी १२०सुरूपपात्र श्वेतचतुर्दन्तपट्टगजनवग्रहादिभूरिदुष्प्रापवस्तुभिः सार्धं तच्छिरो हेममठितं लात्वा पश्चात् पत्तनप्राप्तेन ७२राणकदृष्टौ राजसदसि कुमारपालपादपीठाग्रे मुक्तम् । ततस्तुष्टेन राज्ञा राजपितामहबिरुदं श्रीअम्बडदेवाय प्रदत्तं १कोटिहेम ३-हैमकलश २४जात्यतुरगैः समम् । ततस्तेन त्रिहैमकलशीं विना भृगुकच्छादिषु प्रासादशृङ्गस्थापनार्थं, सर्वं गृहान्तराले निजकुलपूर्वजजिनधर्मगुरुस्वपराक्रमादिगुणवर्णनपरयाचकेभ्यः प्रदत्तम् । ततो नृपकोपे, त्वं द्वादशग्रामाधीशत्रिभुवनपालपुत्रः, अहं तवाष्टादशदेशाधिपस्य पुत्रः, कथं नाधिकं ददामि ? । संतुष्टः कुमारपालः । तथा तेनाऽम्रदेवेन भृगुकच्छे श्रीमुनिसुव्रतस्वामिविहार आरात्रिकावसरे देवगुणवर्णनपरमार्गणेभ्यो दत्तं यथा——

द्वात्रिंशद् द्रम्मलक्षा भृगुपुरवसतेः सुव्रतस्याऽर्हतोऽग्रे कुर्वन् माङ्गल्यदीपं स सुरनरवरश्रेणिभिः स्तूयमानः ।
योऽदादर्थिव्रजस्य त्रिजगदधिपतेः सद्गुणोत्कीर्त्तनायां स श्रीमानाम्रदेवो जगति विजयतां दानवीराग्रयायी ॥२२७॥

भृगुकच्छप्रासादप्रतिष्ठामहोत्सवसंतुष्टेनेति हेमसूरिणोपबृंहितः । यथा——

किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ? । कलौ चेद् भवतो जन्म कलिरस्तु कृतेन किम् ? ॥२२८॥

तदनु १लक्ष ३२सहस्रैर्हेमाचार्याणां न्युञ्छनं कृत्वा मार्गणेभ्यो दत्तम् ।

पुहविकरंडे बंभंडसंपुडे भमइ कुण्डलिज्जंतु । तुह अम्बडदेव ! जसो अ लद्धपसरो भुअंगुव्व ॥२२९॥

सपादकोटिद्रम्मदानम् ॥ इति कुमारपालमहामान्यप्रधानश्रीअम्बडदेवकीर्त्तिदानम् ॥ तथा श्रीविमलमन्त्रिणा प्रासादेऽर्बुदोपरि कार्यमाणे तद्भूमिनेता वालीनाहः कमठीयभङ्गपातेनाऽन्तरायं करोति स्म । मद्यमांसादि नैवेद्यं याचते स्म । मन्त्रिणाऽम्बिकाबलेन निर्धाटितो वटकनैवेद्येनैव रतिं प्रापितः। प्रासादसिद्धौ प्रतिष्ठामहोत्सवे संघः सर्वशक्त्या पूजितः । मार्गणास्तथा कृतार्थीकृताः, यथाऽद्यापि 'विमलश्रीसुप्रभातम्' इत्याशीर्वादं कथयन्ति, कोऽर्थः ?—विमलो मन्त्री, श्रीदेवी भार्या, तयोर्यथा सुप्रभातं सुदिवसमभूत्, तथा भवतामपि। अत्र चारणवचनम्—

मंडी मुरकी रइ करइ मिल्हीअ मंसग्गाह । विमलहिं खंडउं कड्ढीउं नट्ठउ वालीनाह ॥२३०॥

लक्षं ददौ॥ इति श्रीविमलस्य कीर्तिदानं दण्डनायकस्य ॥ अथ वस्तुपालकीर्त्तिदानप्रबन्धाः—श्रीवस्तुपालः प्रतिवर्षं वारत्रयं सर्वचतुर्विधसङ्घपूजां करोति स्म । एकदा सङ्घार्चायां जायमानायां एको दरिद्रो द्विजः प्राह—देव ! कल्पद्रुमावतार इव सर्वलोकवाञ्छितं ददानो दृश्यसे, एकवेलं ममापि संमुखमवलोकय, यथा

दारिद्र्याय जलाञ्जलिं ददामि । तदा मन्त्रिणोक्तम्—रे ! किमप्युद्धरितवस्त्रमस्ति ?, एका वस्त्रबन्धनस्थूल-पट्यस्ति, देहि । सा द्विजस्यार्पिता । तेन विलोक्योक्तम्—

क्वचित् सूत्रं क्वचित् तूलं कार्पासास्थि क्वचित् क्वचित् । देव ! त्वदरिनारीणां कुटीतुल्या पटी मम ॥२३१॥

मन्त्रिणोक्तम्—पुनर्वद, सप्तदशवारमुक्तम् । १७शतानि द्रम्माणां समर्पितानि ॥ एकदा यात्राप्रारम्भे वन्दनार्थागतमन्त्रिणा सभायां किञ्चिन्निद्रायमाणनरचन्द्राचार्यो वादितः प्राह—नाहं निद्रायमाणः, किन्तु नेत्रे निमील्य लक्ष्मीनारायणयोः समुद्रमध्यस्थयोः परस्परालापं शृण्वन्नस्मि । यथा—

लक्ष्मि ! प्रेयसि ! केयमास्यशितिता वैकुण्ठ ! कुण्ठोऽसि किं नो जानासि पितुर्विनाशमसमं सङ्घोत्थितैः पांसुभिः? ।
मा भीर्भीरु ! गभीर एव भविताऽम्भोधिश्चिरं नन्दतात् संघेशो ललितापतिर्जिनपतेः स्नात्राम्बुकुल्यां सृजन् ॥२३२॥

बालचन्द्रक्षुल्लकेन श्रीवस्तुपालो वर्णितः—

गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं पुनर्भूत्या त्वं च समुल्लसद्गुणगणः किंवा बहु ब्रूमहे ।
श्रीमन्त्रीश्वर ! नूनमीश्वरकलायुक्तस्य ते युज्यते बालेन्दुं चिरमुच्चकै रचयितुं त्वत्तोऽपरः कः क्षमः ? ॥२३३॥

तदनु मन्त्रिणा भट्टारकपादोपवेशनं कारितं बालचन्द्रस्य । एकदाऽमरचन्द्रमुनौ पर्षदि तत्कालकृत-

नव्यश्लोकैर्व्याख्यानं कुर्वति द्विपदी प्रोक्ता-- अस्मिन्नसारे संसारे सारं सारङ्गलोचना । वन्दनार्थमागच्छता द्वारस्थेन मन्त्रिणा श्रुता , अहो ! रागी स्त्रीकथाकृद् मुनिः, इति ध्यात्वा न वन्दितः । ज्ञातमन्त्रिचित्ताभि-प्रायेणाऽमरचन्द्रेणोक्तम्--

अस्मिन्नसारे संसारे सारं सारङ्गलोचना । यत्कुक्षिप्रभवा एते वस्तुपाल ! भवादृशाः ॥२३४॥

तुष्टेन पादोपवेशनं कारितम्। एकदा तेजःपालमन्त्री भृगुपुरमायातः श्रीमुनिसुव्रतचैत्यार्चकैराचार्यैरुक्तम्--मन्त्रिन् ! संदेशकमेकं शृणु । मन्त्रिणोक्तम्--आदिश्यताम् । अद्य पाश्चात्ययामिन्यां वृद्धा नार्येका समेत्य प्राह--

तेजःपाल ! कृपालुधुर्यविमलप्राग्वाटवंशध्वज ! श्रीमन्नम्बडकीर्त्तिरद्य वदति त्वत्संमुखं मन्मुखात् ।
आजन्मावधि वंशयष्टिकलिता भ्रान्ताऽहमेकाकिनी वृद्धा संप्रति पुण्यपुञ्ज ! भवतः सौवर्णदण्डस्पृहा ॥२३५॥

इत्युक्ते मन्त्रिणा देवकुले २२देवकुलिकासहिते दण्डकलशाः स्वर्णमयाः सर्वत्राऽकार्यन्त। आचार्याणां १० द्रम्मसहस्रैर्न्युञ्छनानि ॥ श्रीशत्रुञ्जयतीर्थे संघसमक्षं श्रीवस्तुपालमन्त्रिणि आरात्रिके क्रियमाणेऽर्थिनां मन्त्रि-मध्ये झम्पापनं दृष्ट्वा सोमेश्वरकविः प्राह--

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते पाताले पवमानभोजनजने कष्टं प्रनष्टो बलिः ।

नीरागानगमन् मुनीन् सुरभयश्चिन्तामणिः काऽप्यगात् तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ॥२३६॥

सोमेश्वरस्य सहस्रं ददौ । संतुष्टेन सोमेश्वरेण पुनरभाणि—

के निधाय वसुधातले धनं वस्तुपाल ! न यमालयं गताः ?।
त्वं तु नन्दसि निवेशयन्निदं दिक्षु धावति जने क्षुधातुरे ॥ २३७ ॥

पुनरपि सहस्रं ददौ । तथाऽरिसिंहकविः—

श्रीकासाम्बुजमाननं परिणतं पञ्चाङ्गुलिच्छद्मतो जग्मुर्दक्षिणपञ्चशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणिर्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥२३८॥

द्विसहस्री दत्ता ॥ एकदा तुष्टेन श्रीवीरधवलेन मन्त्रिणे दशलक्षी प्रसादे दत्ता । सा तु तेन गृहादर्वागेव दत्ता, तदा कश्चित् कविः—

श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि संकोचमवाप्नुवन्ति ।
समागतेऽपि द्विजराजलक्षे सदा विकाशी तव पाणिपद्मः ॥ २३९ ॥

इति स्तूयमानो लज्जयाऽधो विलोकयति स्म, तदा नानाख्यकविः प्राह—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं लज्जानम्रशिरा धरातलमिदं यद् वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दातिलकश्रीवस्तुपाल ! ध्रुवं पातालाद् बलिमुद्दिधीर्षुरसकृद् मार्गं भवान् मार्गति ॥२४०॥
सुवर्णजिह्वा दत्ता ॥ कर्णस्त्वचं शिविर्मांसं, जीवं जीमूतवाहनः, ददौ दधीचिरस्थीनि; पण्डितत्रयवाक्यमिदम् ।

जयन्तदेवेन समस्यापादं चक्रे--वस्तुपालः पुनर्वसु । सहस्रचतुष्टयं प्रदत्तम् ॥ एकदा सोमेश्वरो वस्तुपालधवलगृहे समागतः, वर्यासनदानेऽपि नोपविशति स्म । मन्त्रिणा कारणं पृष्टः प्राह--

अन्नदानैः पयःपानैर्धर्मस्थानैश्च भूतलम् । यशसा वस्तुपालेन रुद्धमाकाशमण्डलम् ॥ २४१ ॥

इति स्थानाभावाद् नोपविश्यत इत्युक्ते नवसहस्री प्रदत्ता । एकस्यां संघार्चायां विजयसेनसूरिभिरुक्तम्--
नन्दनोद्यानपालको बुम्बां पातयन्निन्द्रसभायामागत्य वक्ति । यथा--

देव ! स्वर्नाथ ! कष्टं ननु क इह भवान् नन्दनोद्यानपालः

खेदस्तत्कोऽद्य केनाऽप्यहह ! हृत इतः काननात् कल्पवृक्षः ? ।

इन्द्रप्रतिवचो यथा--

हुं मा वादीस्तदेतत् किमपि करुणया मानवानां मयैष

प्रीत्याऽऽदिष्टोऽयमुर्व्यास्तिलकयति तलं वस्तुपालच्छलेन ॥ २४२ ॥

रोहणाचलं प्रति कस्यापि प्रश्नः—

हंहो रोहण ! रोहति त्वयि मुहुः किं पीनतेयं सदा ?

रोहणप्रतिवचो यथा शृणु— भ्रातः ! संप्रति वस्तुपालसचिवत्यागैर्जगत् प्रीयते ।

तेनाऽस्तैव ममार्थिकुट्टनकथा प्रीतिर्दरीकिंनरीगीतैस्तस्य यशोऽमृतैश्च तदियं मेदस्विता मेऽधिका ॥ २४३ ॥

एकदा देवकपत्तनतः सोमेश्वरपूजाकारका भट्टाः समागताः। मन्त्रिणा पृष्टाः—वर्या पूजा क्रियमाणाऽस्ति नवा ?। ते प्राहुः——

नादत्ते भसितं सितं सचिव ! ते कर्पूरपूरं स्मरन् कौपीने न च तुष्यति प्रभुरसौ शंसन् दुकूलानि ते ।

दिग्धो दुग्धभरैर्जलेषु विमुखः श्रीवस्तुपाल ! त्वया कर्पूरागुरुपूरितः पशुपतिर्नो गुग्गलं जिघ्रति ॥ २४४ ॥

अस्य काव्यस्य कारकाणां भट्टानां दशसहस्री प्रदत्ता। दानमण्डपिकायां निरर्गलं दानं ददानं वस्तुपालं कवयः स्तुवन्ति । यथा—

ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्वणास्तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे ! भवत्या स्तुताः ।

तस्मात् तत्तदघाऽपघातविधयै बद्धादरा संप्रति श्रेयःस्थानविधानधिक्कृतकलिं श्रीवस्तुपालं स्तुहि ॥ २४५ ॥

सूरो रणेषु च रणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु मन्दोऽपि च ग्रहमयो न हि वस्तुपालः ॥ २४६ ॥

श्रीभोजवदनाम्भोजवियोगविधुरं मनः । श्रीवस्तुपालवक्रेन्दौ विनोदयति भारती ॥ २४७ ॥
सर्वेषां सहस्रदानम् ॥

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः केषां न प्रथयन्ति चेतसि मुदः श्रीवस्तुपालोक्तयः ? ॥२४८॥

श्रीवस्तुपाल ! तव भालतले जिनाज्ञा वाणी मुखे हृदि कृपा करपल्लवे श्रीः ।
देहे द्युतिर्विलसतीति रुषेव कीर्त्तिः पैतामहं सपदि धाम जगाम नाम ॥ २४९ ॥

अपरस्तु— अनिःसरन्तीमपि गेहगर्भात् कीर्त्तिं परेषामसतीं वदन्ति ।
स्वैरं भ्रमन्तीमपि वस्तुपाल ! त्वत्कीर्त्तिमाहुः कवयः सतीं तु ॥ २५० ॥

इतरस्तु— सेयं समुद्रवसना तव दानकीर्त्तिपूरोत्तरीयपिहितावयवा समंतात् ।

अद्यापि कर्णविकलेति न लक्ष्यते यत् तेनाऽद्भुतं सचिवपुङ्गववस्तुपाल ! ॥ २५१ ॥

कश्चित्तु– क्रमेण मन्दीकृतकर्णशक्तिः प्रकाशयन्तीव बलिस्वभावम् ।

कैर्नाऽनुभूता सशिरःप्रकम्पं जरेव दत्तिस्तव वस्तुपाल ! ॥ २५२ ॥

तेभ्यः कविभ्यः सहस्रं ददौ ॥

हंसैर्लब्धप्रशंसैस्तरलितकमलप्रत्तरङ्गैस्तरङ्गैर्नीरैरन्तर्गभीरैश्चटुलबककुलग्रासलीनैश्च मीनैः ।

पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतैर्भाति प्रक्रीडदाऽऽतिस्तव सचिव ! चलच्चक्रवाकस्तटाकः ॥२५३॥

ल.लितासरोवरवर्णने सोमेश्वरस्य षोडशसहस्रप्रदानं सर्वाऽनुप्रासानुमानेन । श्रीशत्रुञ्जयोपरि अनुपमदेव्या अनुपमसरः कारितम् । तस्य भरितमहोत्सवे क्रियमाणे चारणेनोक्तम्–

भाऊ भरहिं काइं सेत्तुंजि सर न कराविउं । जाणूं हुं इणइ ठामि आगइ अणुपमडी कीउं ॥ २५४ ॥

एकविंशतिः शतानि द्रम्माणां दापितानि ॥ तथा स्वसंकीर्त्तनगुणकुलपूर्वजावदातप्रतिपादककीर्त्ति-कौमुदीसुकृतसङ्कीर्तनकाव्यकृत्सोमेश्वरारिसिंहयोर्ग्रामग्रासाश्वकनकदुकूलादिदानं यावज्जीवार्हं दत्तम् । इत्या-दिश्रीवस्तुपालकीर्त्तिदानप्रबन्धाः शतशो यथा श्रुताः स्वयं वाच्याः ८४, २४, ७२, प्रबन्धेभ्यः ॥ इति

श्रीवस्तुपालकीर्त्तिदानम् ॥ तथा श्रीशत्रुञ्जयमहायात्राकारकबहुद्रव्यव्ययकसीसच्छटाघाटबन्धनादिरुद्रमहालयजीर्णोद्धारकरणपरदेशलहरसा०शालिगसभायां कश्चिद् द्विजः समागात् । पृष्टः—कुतः समागतः ?, तेनोक्तम्— कैलासात् । किं वर्त्तते तत्र ? ।

ब्राह्मी वीक्ष्य शरस्य कारणशिरोमालां मरालाशया कण्ठेकाल ! तवाऽधिकण्ठलुठितां वैरस्य शुद्ध्यै किल ।
आधत्ते भवदालयस्य नितरां मूलोपलोन्मूलनं का भीतिः परमस्य रक्षणविधौ श्रीशालिगो गर्जति ? ॥२५५॥

पुनः कालान्तरेऽपाठि—

मन्येऽहं सदसद्दशावितरणे सर्वस्य शक्तो विधिस्तेनाऽप्यस्य नरस्य कस्यचिदहो ! नाऽऽयाति यातं वयः ।
यत्ते रुद्रमहालय ! स्थिरतया श्रीशालिगेनाऽधुना सिद्धश्रीजयसिंहदेवयशसां दत्तं पुनर्यौवनम् ॥ २५६ ॥

विप्राय भूरि दत्तम् । सा०शालिगकीर्त्तिदानम् । तथा सा०समराकेण सं० १३७१ वर्षे श्रीशत्रुञ्जयप्रतिमोद्धारः कारितः । संघार्चायां रामभट्टेनाऽभाणि—

अधिकं रेखया मन्ये समरं सगरादपि । कलौ म्लेच्छबलाकीर्णे येन तीर्थं समुद्धृतम् ॥ २५७ ॥

तुष्टेन सा०-समराकेण सुवर्णजिह्वा दत्ता ॥ इति सा०-समराकीर्त्तिदानम् ॥ एवं सा०-सारङ्गसोनपाल सा०-सगरा

सा० जगसी सा० मुहणसी सं० आभू सं० पेथडझांझणादीनां कीर्त्तिदानप्रबन्धाः स्वयं वाच्याः। एवमभयसुपात्रानुकम्पोचितकीर्त्तिभेदाद् दानं पञ्चविधं व्यावर्णितम्, परं 'दोहि वि मुक्खो भणिओ' तेषु अभयदानसुपात्रदानाभ्यां मोक्षो भवति, श्रीआदीश्वरचन्दनादिवत्। 'तिन्नि वि भोगाइयं दिंति' तेषु अनुकम्पोचितकीर्त्तिदानानि भोगादिकं राज्यऋद्धिप्रभृतिकं ददाति, मेघकुमारवत्। उचितदानात् कृतप्रतिकृतभोजनवस्त्रपात्रादि फलम्, कीर्तिदानात् महत्त्वं स्वोत्कर्षश्च। अतः कारणाद् विवेकिभिः सर्वप्रकारैः श्रीदानधर्मः समाराधनीयः ॥

इति सुपात्रदानोपदेशो द्वितीयः।

## अथ शीलोपदेशः।

—:०:—

ये यौवने शीलधरा नरा स्युस्तेषामहो ! सत्पुरुषेषु रेखा।
ते तारकाः स्युः प्रविशान्ति पूरे तरङ्गिणीनां तरणक्षमा ये ॥ १ ॥

इह जगति सकललोकश्लाघनीयास्त एव धन्या ये यौवनेऽपि शीलालङ्कृताः सन्मार्गगामिणः। यतः—

यौवनेऽपि प्रशान्ता ये ये च हृष्यन्ति याचिताः । वर्णिता ये च लज्जन्ति ते नरा जगदुत्तमाः ॥ २ ॥
ये न स्खलन्ति ते दक्षाः कृष्णकेशतमोभरे । वार्द्धके तु सदोद्द्योतः शिरस्थपलितेन्दुतः ॥ ३ ॥

यौवने व्रतपालनं दुष्करम् । यतः—

मकरध्वजशार्दूलं पञ्चेन्द्रियविषयतस्कराकीर्णम् । क्षेमेण नरः को वा तारुण्यारण्यमुत्तरति ? ॥ ४ ॥
यौवने विकरोत्येव मनः संयमिनामपि । राजमार्गे प्ररोहन्ति वर्षाकाले किलाऽङ्कुराः ॥ ५ ॥

शीलरत्नयुजा पुरुषेण स्त्रीनिन्दा मनसि चिन्तनीया । यथा—

इयं रण्डा कुण्डी कलिमलमलस्यैव सुतरां चलदम्भारम्भस्फुरदतुलपिण्डीव विहिता ।
करण्डी चात्यन्तं चटितनिकरस्येह विधिना त्विमां रामां निन्द्यां परिहर वृषश्रेणिचरटीम् ॥ ६ ॥

जासिं च सङ्गवसओ जसधम्मकुलाइं हारिसे मूढ ! । तासिंपि किंपि चित्ते चिन्तसु नारीण दुच्चरियं ॥७॥
पढमं चिअ पविसंती नवसंगमलज्जिअव्व मणभवणे । बाला विवेगदीवं दिप्पन्तं झत्ति विज्झवइ ॥ ८ ॥

मा वच्चह वीसंभं नईण नारीण कुडिलमग्गाणं । वड्ढिअपयोहराओ कुलाइं कूलाइं पाडन्ति ॥ ९ ॥
प्राप्तुं पारमपारस्य पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां दुश्चरित्रस्य नो पुनः ॥ १० ॥

रविचरिअं गहचरिअं ताराचरिअं च राहुचरिअं च । जाणंति बुद्धिमन्ता महिलाचरिअं न याणंति ॥ ११ ॥

अश्वप्लुतं माधवगर्जितं च स्त्रीणां चरित्रं भवितव्यता च ।
अवर्षणं चाप्यतिवर्षणं च देवा न जानन्ति कुतो मनुष्याः ? ॥ १२ ॥

जलमज्झे मच्छपयं आगासे पंखिआण पयपंती । महिलाण हिअयमग्गो तिन्नि वि लोए न दीसंति ॥१३॥

हयविहिणा संसारे महिलारूवेण मण्डिअं पासं । बज्झन्ति जाणमाणा अयाणमाणा वि बज्झन्ति ॥ १४ ॥

संसार ! तव निस्तारपदवी न दवीयसी । अन्तरा दुस्तरा न स्युर्यदि रे ! मदिरेक्षणाः ॥ १५ ॥

नीअंगमाहिं सुपओहराहिं ओप्पिच्छमन्थरगईहिं । महिलाहिं निन्नगाहि व गिरिवरगरुआ वि भिज्जन्ति॥१६॥

बहुआ नर दीसंति नारीनइबुड्डवि गया । विरला केइ तरंति तारुण्णयतारू हूआ ॥ १७ ॥

वारी गयाण जालन्ति मीणहरिणाण वागुरा चेव । पासो अ पक्खिआणं नराण तह बन्धणं नारी ॥ १८ ॥

पढ़न गुनन कविचातुरी है सब बात सहल्ल । मदनदहन मनवसिकरन गगनचलन मुसकिल्ल ॥१९॥

कामं कुलकलङ्काय कुलजाताऽपि कामिनी । श्रृङ्खला स्वर्णजाताऽपि बन्धनाय न संशयः ॥ २० ॥

महिला कूडचरित्त बंभ पुण पार न जाणइ । दिनि डरपइ दोरडइ रयणि विसहरफण मोडइ ।

उंदरि दिट्ठइ उब्भसइ कांनि धरि वांघ जिरालइ । उंबरि चढति ढलि पडइ चढिं डूंगरिअ णिआलइ ।
सात समुद्र लीला तरइ सुक्कीनइ बुड्डवि मरइ । राम कवीसर इम कहइ स्त्रीवीसास मति को करइ ॥ २१ ॥

दृष्टान्तः मुञ्जमृणालवत्योः ।

धनवन्ती मत गव्व करि पिक्खवि पण्डरूआइं । चऊदहसय छहुत्तरां मुंज गइन्द गयाइं ॥ २२ ॥
झोली तुट्टवि किं न मुउ किं न हुवउ छारह पुंज । घरि घरि भिक्ख मगाविइ जिम मक्कड तिम मुंज ॥२३॥
अक्षयतृतीयादिने गुलघृतबिन्दुके मण्डके तुण्डेन रण्डया कयाचित् खण्डिते भिक्षां भ्रमन् मुञ्ज आह—
रे रे ! मण्डक ! मा रोदीर्यदहं खण्डितोऽनया । रामरावणमुञ्जाद्याः स्त्रीभिः के के न खण्डिताः ?॥ २४ ॥
रे रे ! यन्त्रक ! मा रोदीः क कं न भ्रमयन्त्यमूः । कटाक्षाक्षेपमात्रेण, कराकृष्टस्य का कथा ? ॥ २५ ॥

इत्यादिश्लोकाः प्रसिद्धाः ।

अनुकूलसप्पिमाणावि रमणीणं मा करिज्ज वीसासं । जह रामलक्खणेहिं सुप्पणहाए महारन्ने ॥ २६ ॥

प्रायः पुमांसः सरलस्वभावा रण्डास्तु कौटिल्यकलाकरण्डाः ।
ताताद् ययाचे कथमन्यथाऽस्मिन् कलेवरं केकयनन्दनेयम् ? ॥ २७ ॥

लोकप्रसिद्धा कथा । इत्यादिस्त्रीस्वरूपं विभाव्य शीलं परिपालनीयम्। इति शीलोपदेशः। पुनः प्रकारान्तरेण यथा—

मनुष्याः किङ्करायन्ते देवा निर्देशवर्त्तिनः । शीलभाजोऽथवा कस्य कल्पवृक्षो न वल्लभः ? ॥ २८ ॥

शीलं प्रधानं न कुलं प्रधानं कुलेन किं शीलविवर्जितेन ? ।
नैके नरा नीचकुले प्रसूताः स्वर्गं गताः शीलमुपेत्य धीराः ॥ २९ ॥

विभूतयोऽपि मा भूवन् शीलम्लानिपचेलिमाः । गेहदाहसमुद्भूतमुद्द्योतं कः समीहते ? ॥ ३० ॥

दृष्टान्तो यथा—सीता महासती राज्यशृङ्गारार्पणप्रलोभिनाऽपि रावणेन न शीलाद् भ्रष्टा । यदुक्तम्—

ऐश्वर्यराजराजोऽपि रूपमीनध्वजोऽपि च । सीतया रावण इव त्याज्यो नार्या नरः परः ॥ ३१ ॥

सीतया दुरपवादभीतया पावके स्वतनुराहुतिः कृता । पावकस्तु जलतां जगाम यत् तत्र शीलमहिमाविजृम्भितम्॥३२॥

मनसि वचसि काये जागरे स्वप्नमार्गे यदि मम पतिभावो राघवादन्यपुंसि ।
तदिह दह ममाङ्गं पावकं पावकेदं सुकृतविकृतभाजां येन लोकैकसाक्षः ॥ ३३ ॥

कुण्डले नाऽभिजानामि नाभिजानामि कङ्कणे । नूपुरे त्वभिजानामि नित्यं पादाब्जवन्दनात् ॥३४॥

इति लक्ष्मणवचः । एवमपरैः शीले यतनीयम् ॥ इति द्वितीयशीलोपदेशः ॥

सुविसुद्धसीलजुत्तो पावइ किर्त्तिं जसं च इह लोए । सव्वजणवल्लहच्चिअ सुहगइभागी य परलोए॥३५॥

देवदाणवगन्धव्वा जक्खरक्खसकिंनरा । बंभयारिं नमंसंति दुक्करं जे करन्ति ते ॥ ३६ ॥

जो देइ कणयकोडिं अहवा कारेइ कणयजिणभवणं । तस्स न तत्तिय पुन्नं जत्तिअ बंभव्वए धरिए ॥३७॥

परमतेऽपि—एकरात्रोषितस्याऽपि या गतिर्ब्रह्मचारिणः । न सा क्रतुसहस्रेण प्राप्तुं शक्या युधिष्ठिर ! ॥३८॥

एकदा पत्तने श्रीहेमसूरयः श्रीजयसिंहनृपसभायां समागताः । भूपदत्तासने उपविष्टाः । नृपेण पृष्टम्—किं संप्रति वणिजामग्रे व्याख्यायमानमस्ति ? । गुरुभिः प्रोक्तम्—स्थूलभद्रचरित्रम् । किं तत् ? पृष्टे गुरुभिः प्रोक्तम्—पूर्वपरिचितकोशावेश्यापरिहारषड्विकृतिभोजनादि स्थूलभद्रचरित्रम् । तदा क्रुधा ज्वलद्भिर्देवबोधिप्रभृतिभिर्विप्रैः प्रोक्तम्—

विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशिनस्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।

आहारं सुघृतं पयोदधियुतं भुञ्जन्ति ये मानवास्तेषामिन्द्रियनिग्रहः कथमहो ! दम्भः समालोक्यताम् ॥३९॥

हेमाचार्यैः प्रोक्तम्—

सिंहो बलिद्विरदशूकरमांसभोजी संवत्सरेण रतिमेति किलैकवारम् ।

पारापतः खरशिलाकणभोजनोऽपि कामी भवत्यनुदिनं वद कोऽत्र हेतुः ?॥ ४० ॥

सत्योत्तरदानाद् राजा रञ्जितः ।

वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं रम्यं धाम मनोरमं वपुरहो ! नव्यो वयःसंगमः ।

कालोऽयं जलदागमस्तदपि यः कामं जिगायाऽऽदरात् तं वन्दे युवतिप्रबोधकुशलं श्रीस्थूलभद्रं प्रभुम् ॥४१॥

श्रीनेमितोऽपि शकडालसुतं विचार्य मन्यामहे भटममुं वयमेकमेव ।

देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं यन्मोहनालयमयं तु वशी प्रविश्य ॥ ४२ ॥

योऽग्नौ प्रविष्टोऽपि हि नैव दग्धश्छिन्नो न खड्गाग्रगतप्रचारः ।

कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो नाक्तोऽञ्जनागारनिवास्यहो ! यः ॥ ४३ ॥

श्रीस्थूलभद्रेण कोशाऽपि प्रतिबोधिता—

कुरंडरंडत्तणदुहगाई वञ्झत्तनिंदूविसकन्नगाई । जम्मंतरे खण्डिअसीलभावा नाऊण कुज्जा दढसीलभावं ॥४४॥

इत्याद्युपदेशशतैः । अत एव स्थूलभद्रनामस्मरणं चतुरशीतिजिनचतुर्विंशतिकां यावद् भविष्यति ।

एवमपरैः शीलाराधने यतनीयम् । इति तृतीयोपदेशः । पुनः प्रकारान्तरेण यथा—

सीमा खानिषु वज्रखानिरगदङ्कारेषु धन्वन्तरिः कर्णस्त्यागिषु देवतासु कमला दीपोत्सवः पर्वसु ।
ओङ्कारः सकलाक्षरेषु गुरुषु व्योम स्थिरेषु क्षितिः श्रीरामो नयतत्परेषु परमं ब्रह्म व्रतेषु व्रतम् ॥ ४५ ॥

ब्रह्मव्रतं शीलोपदेशमालाशीलकुलकादिनानाप्रकरणभणनवाचनादिनाऽऽराधनीयम् । ब्रह्मव्रताराधने सुभाषितसहस्राणि सन्ति, अत्र ग्रन्थगौरवभयाद् नोक्तानि स्वयमवतारणीयानि। सूक्तावलीप्रभृतिधर्मोपदेशग्रन्थेभ्यः शीलव्रतोदाहरणानि संक्षेपतः कियन्ति कथ्यन्ते, तद्यथा—

श्रीमन्नेमिजिनो दिनोऽघतमसां जम्बूप्रभुः केवली सम्यग्दर्शनवान् सुदर्शनगृही स स्थूलभद्रो मुनिः ।
साऽच्चङ्कारिसरस्वती च सुभगा सीता सुभद्रादयः शीलोदाहरणे जयन्ति जनितानन्दा जगत्यद्भुताः ॥४६॥

श्रीनेमीश्वरभ्राता रथनेमिः रागतुरङ्गमेण पातितोऽपि गिरिगुहायां निरावरणराजीमतीरूपमोहितोऽपि राजीमत्या प्रतिबोधितस्तपस्तप्त्वा शिवं गतः । यतः—

रागद्वेषतुरङ्गमपौनःपुन्याधिरोहपतनशतैः । विहिताभ्यासस्तदुपरि दत्तपदस्त्वरितमेति शिवम् ॥ ४७ ॥

वसन्तपुरे शिवङ्करः श्रेष्ठी परमार्हतो निवसति स्म। तत्र श्रीधर्मदाससूरयः संप्राप्ताः। वन्दनार्थं शिवङ्करो गतः।

वन्दनकानि दत्तानि। गुरुपार्श्वे आलोचना गृहीता। सहर्षेणाऽभाणि—भगवन्! मम लक्षसाधर्मिकभोजनप्रदानमनोरथोऽस्ति, परं किं करोमि ?, धनं तथाविधं नास्ति। गुरुभिरभाणि-याहि भृगुकच्छे श्रीमुनिसुव्रतस्वामिवन्दनार्थम्, तत्र जिनदासाभिधः श्राद्धः भार्यासुहागदेवीयुतः सर्वशक्त्या वस्त्रभोजनाद्यलङ्करणीयः, तद्वात्सल्येन लक्षसाधर्मिकभोजनदानपुण्यं भविष्यति। ततस्तेन तथा कृतम्, भोजनादिभक्त्या जिनदासः प्रपूजितः। तदनु पृष्टं चतुष्पथे, भोः!, जिनदासः सुकृती कीदृशोऽस्ति सत्यो वा दाम्भिको वा ?। लोकाः कथयन्ति-शृणु भोः!, जिनदासः सप्तवार्षिकः शालायां प्राप्तो गुरुमुखात् शीलोपदेशमालाव्याख्यां श्रुत्वा एकान्तरितब्रह्मव्रतं प्रतिपन्नम्। एवं सुहागदेव्याऽपि साध्वीपार्श्वे एकान्तरशीलप्रातिपालनं प्रतिपन्नम्। भवितव्यवशात् परस्परं पाणिग्रहणं जातम्। ततो यस्मिन् दिने जिनदासस्य मुत्कलम्, तस्मिन् दिने सुहागदेव्या नियमः, यस्मिन् तस्या मुत्कलं तस्मिन् तस्याभिग्रहः। तदनु सुहागदेव्याऽभाणि—स्वामिन्! पुनरपरस्याः पाणिग्रहणं कुरु, अहं दीक्षां गृह्णामि। तदनु गुरुपार्श्वे ब्रह्मव्रतमेव प्रतिपन्नं यावज्जीवं सकलश्रीसङ्घमाडिप्रदानपूर्वम्। अतः कारणात् शिवङ्कर! जिनदाससमानस्तु श्रावकः संप्रति न श्रूयते आबालब्रह्मचारी महाधर्मपात्रम्। तत्पादपर्युपासनां कृत्वा शिवङ्करः वसन्तपुरे आगात्। इति ब्रह्मव्रते जिनदासदृष्टान्तः। यथा शीलमाहात्म्यम्—

मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुंजयो दाने प्राणिदया गुणेषु विनयो ब्रह्म व्रतेषु व्रतम्० ।
अक्खाण सणी कम्माण मोहणी तहय वयाण बंभवयं गुत्तीण य मणगुत्ती चउरो दुक्खेहिं जिप्पन्ति ॥४८॥

एवमपरेऽपि शीलधरा--द्रौपदी--कलावती--मृगावती--शीलवती--सुलसा--सुभद्रा--सीताप्रभृतीनां दृष्टान्ताः । ब्राह्मी--चन्दनबालिका--भगवती--राजीमती--द्रौपदी० प्रमुखाः शतशः शीलमाहात्म्ये स्वयं दृष्टान्ता वाच्याः । ते च ग्रन्थगौरवाद् नोक्ताः ।

इति शीलोपदेशाः ।



## अथ तप उपदेशः ।



तपः सर्वाक्षसारङ्गवशीकरणवागुरा० ।

चक्रे तीर्थकरैः स्वयं निजगदे तैरेव तीर्थेश्वरैः श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारणम् ।
सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृद् देवाकर्षणमारदर्पदलनं तस्माद् विधेयं तपः ॥ १ ॥

तीर्थंकरैस्तपश्चक्रे । यथा——

संवच्छरमुसभजिणो छम्मासा वद्धमाणजिणचन्दो । इय विहरिआ निरसणा जइज्जए ओवमाणेण ॥२॥

द्वादशविधं तपस्तीर्थंकरैः प्ररूपितम्— अणसणमूणोअरिआ०; पायच्छित्तं विणओ० इत्यादि ॥

श्रीहेतुस्तपः । यथा——तपसा सुवर्णपुरुषादिसिद्धयः ॥ भवक्षयकृत्तपः—

उवसमविवेगसंवरपयचिन्तणवज्जदलिअपावगिरी । सोढुवसग्गो पत्तो चिलायपुत्तो सहस्सारे ॥ ३ ॥

यद् दूरं यद् दुराराध्यं दुर्लभं यत् सुरैरपि । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ ४ ॥

विदारितरोगं तपो यथा—श्रीसिद्धचक्राऽऽचामाम्लतपसा श्रीपालस्य कुष्ठोपशान्तिः, निर्जरा, कर्मक्षतिः; ब्रह्मस्त्रीभ्रूण गोघातादिदुष्कर्मवानपि दृढप्रहारिः स्वर्गं गतस्तपसा ॥ विघ्नापहारि तपो यथा—द्वारिकायां द्वैपायनासुरकृतोपसर्गा आचामाम्लादितपसा द्वादशवर्षावधि टलिताः, लोकानां श्लथीभवने पुनः प्रकटीभूताः ॥ इन्द्रियदमनं तपसा स्यात् । यतः——

अन्तश्चित्तकरण्डिकं स्थितिजुषो रागादिदोषोरगा वाञ्छामात्रसमीरमक्षविवरैर्भुक्त्वाऽभवन्सोल्वणाः ।

किन्त्वेते किल सर्वथाऽप्यनशनाः स्थाप्या यथाऽन्तर्मुहूर्त्तेनापि क्षयमाप्नुयुस्तव पुनः सौख्यं किमप्यद्भुतम् ॥५॥

मङ्गलकारणं तपः; कुग्रहपीडादुर्निमित्तादिक्षयकरम् । इष्टार्थकृत्तपो यथा—चक्रवर्त्तिनोऽष्टमतपसा मागधवरदामगङ्गासिन्धुप्रभासाधिपदेवानां जयः स्वाभीष्टः स्यात् ॥ देवाकर्षणं तपसा हरिकेशीबलमुनिवद्भवति ॥ कामदलनं तपः । यतः—

देहदुर्गमुदग्राणि तावत् कर्माणि देहिनाम् । नोज्झन्ति यावदन्नाम्बुप्रवेशोऽत्र निरर्गलः ॥ ६ ॥

अन्नादिविकृतादिप्रवेशे सबला एव रागादयः । यतः— उक्तमुत्तराध्ययने—

रसा पगामं न निसेविअव्वा पायं रसा दित्तिकरा नराणां । दित्तं च कामा समभिद्दवन्ति दुमं जहा सादुफलं व पक्खी॥७॥

आकण्ठकयाहारो पिट्ठं आमलइ पडइ सिज्जाए । वाहिज्जइ मयणेणं सज्झाणविवज्जिओ होइ ॥ ८ ॥

इत्यादिहेतुभिर्भाग्यवता तपः कार्यम् ॥ इति तपउपदेशः ॥

रथ्यां पुनाति पवनो मलिनाभियुक्तामर्णः सुवर्णसकलं किल गेहदेहम् ।

पात्रं तु पावकसमेतजलाभिषेकः सम्यक्शमोर्मिसरसं तप एव जीवम् ॥ ९ ॥

सदोषमपि दीप्तेन सुवर्णं वह्निना यथा । तपोऽग्निना तप्यमानस्तथा जीवो विशुद्ध्यति ॥ १० ॥

अपि च—जाव न तवग्गितत्तं सदेहमूसाइ नाणपवणेण । ताव न चत्तकलंकं जीवसुवन्नं तु निव्वडइ ॥ ११ ॥

जीवः कनकवत् पूर्वदुष्कर्ममृद्मध्यस्थोऽपि तपःकृशानुना केवलज्ञानकान्तिदीप्रः स्यात् ।यतः—

जन्मकोटिकृतमेकहेलया कर्म तीव्रतपसा विलीयते । किं न दाह्यमतिबह्वपि क्षणादुच्छिखेन शिखिनाऽत्र दह्यते ॥१२॥

अत्रोदाहरणानि । यथा—

श्रीमद्वीरजिनो दृढप्रहरणः स्वीयप्रतिज्ञादृढः श्लाघ्यो बाहुबली बलोऽप्यविचलः सन्नन्दिषेणो व्रती ।
आनन्दः सदुपासको व्रतरुचिः सा सुन्दरीत्यादयः । कर्मोन्मूलनकोविदेन तपसा देवासुरैर्वन्दिताः ॥ १३ ॥

किं आसि नंदिसेणस्स कुलं जं हरिकुलस्स विउलस्स । आसी पिआमहो सुचरिएण वसुदेवनामुत्ति ॥ १४ ॥
विज्जाहरीहिं सहरिसं नरिंददुहिआहिं अहमहंतीहिं । जं पत्थिज्जइ तइआ वसुदेवो तं तवस्स फलं ॥ १५ ॥

सुन्दरी श्रीआदीश्वरपुत्री बाहुबलिसहोदरी, तद्वत्तपः कार्यम् । यथा—

सट्ठिं वाससहस्सा अविलंबं अंबिलाइं विहिआइं । जाए निक्खमणकए सा सुन्दरिसाविआ धन्ना ॥ १६ ॥

अत्र तपःकुलं सकलं वाच्यम् ॥ इति द्वितीयस्तपउपदेशः ॥

यत्कुष्ठादिगरिष्ठरोगविरतिर्निष्ठीवनालेपनाद् मूत्रस्पर्शवशेन काञ्चनकला यल्लोहधातुष्वपि ।
रत्नानां करपल्लवप्रणयतो यच्चाक्षयत्वोन्नतिस्तद्विश्वत्रयवन्द्यमद्भुतगुणं जीयात्तपःस्फूर्जितम् ॥ १७ ॥

तपसा कुष्ठादिरोगाणां क्षयः स्यात् । तद्यथा—

छज्जइ सणंकुमारो तवबलखेलाइलद्धिसंपन्नो । निच्छूअखरडिअंगुलिसुवन्नसोहं पयासंतो ॥ १८ ॥

तपस्विसत्ककल्पादिप्रावरणतः कलावप्येकान्तरवेलातृतीयज्वराः क्षयं गच्छन्तो दृश्यन्ते । श्रूयन्ते च यथा--गोपगिरौ श्रीआमनरेश्वरस्यैकान्तरः शीतज्वरः, कलाकुशलमान्त्रिकशतकृतोपकाराजातोपशमः श्रीबप्पभट्टिसूरिकल्पप्रावरणात्तत्क्षणात् क्षयं गतः । तपस्विमूत्रेणापि लोहधातुपाषाणाः स्वर्णीभवन्ति । श्रीपादलिप्तसूरीणां स्वगुरुभक्त्या नागार्जुनयोगिना कोटीवेधो दुष्प्रापः सिद्धरसः स्वक्षुल्लराउललाखणसिंहहस्तेन खर्परेण प्राभृतीकृतः गुरुभिः पृथिव्यां परिष्ठापितः स्वमूत्रेण खर्परं भृत्वा पश्चात्प्रहितः, समर्पितं नागार्जुनस्य, गुरुकृतरसपरिष्ठापनादिव्यतिकरं श्रुत्वा रुष्टो नागार्जुनः, लोहधातुशिलायां खर्परं भग्नं नागार्जुनेन; ततो यासु २ शिलासु मूत्रबिन्दवो लग्नास्ताः सर्वाः काञ्चनीभूताः । विस्मितो योगी गुरूणां पादे लग्नः, महती तपःशक्तिर्यन्मूत्रेणाऽपि सुवर्णसिद्धिः । तपस्विकरस्पर्शेन सर्वं वस्तु क्षयभाक् न स्यात् । यथा--श्रीगौतमकरस्पर्शतः क्षैरेयीभृतपात्रेण त्रिभिरधिकपंचदशशतक्षुधार्त्ततापसानां पारणम् ॥ तस्मात्तपः कार्यम् ।

॥ इति तृतीयोपदेशः ॥

पुनः प्रकारान्तरेण यथा—

विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फलमङ्गस्य जगृहे तत्त्ववेदिभिः ॥ १ ॥

येन शरीरं पुष्टं बहुकाष्ठक्षयकारि त्रसजीवानां वज्रगोलकप्रायं बहुसरसाहारविनाशकारणं बहुवस्त्रविनाशकमसारमेव दृश्यते । सारं तु तपःसाधकम् । यतः—

अथिरेण थिरो समलेन निम्मलो परवसेण साहीणो । देहेण जइ विढप्पइ धम्मो ता किं न पज्जत्तम् ?॥२॥

तत्तपः शरीरसमाधिना कार्यम् ।

सो अ तवो कायव्वो जेण मणो मङ्गुलं न चिंतेइ । जेण न इंदिअहाणी जेण य जोगा न हायंति ॥३॥

तदपि निर्जरार्थं कार्यम् । यतः—

नो इह लोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए॰, नो कित्तिवन्नसद्दसिलोगट्ठयाए तव॰, नन्नत्थ, निज्जरट्ठयाए तवमहिठिज्जा ।

पूजालोभप्रसिद्ध्यर्थं तपस्तप्येत योऽल्पधीः । शोष एव शरीरस्य न किञ्चित्तपसः फलम् ॥ ४ ॥

विवेकेन विना यच्च तत्तपस्तनुतापकृत् । अज्ञानकष्टमेवेदं नो भूरिफलदायकम् ॥ ५ ॥

दृष्टान्तस्तामलिस्तपस्वी—

सट्ठिं वाससहस्सा तिसत्तखुत्तो दएण धोएण । अणुचिन्नं तामलिणा अन्नाणतवुत्ति अप्पफलो ॥ ६ ॥

तामलितापसतपसा सिद्ध्यन्ति जिनेन्द्रशासने सप्त। अज्ञानस्य तु दोषात्स ययावीशानसुरलोके ॥७॥

॥ इति तपउपदेशः ॥

---

पोरिसिचउत्थछट्ठे काउं कम्मं खवंति जं मुणिणो । तं नो नारयजीवा वाससयसहस्सकोडीहिं ॥ १॥

परमतेऽपि—एकं भक्तं सेवते यो मनुष्यस्तस्यैकोनात्रिंशदेवोपवासाः ।

मासे प्रोक्ता यन्मुहूर्त्तप्रमाणे काले भुङ्क्ते वर्जनं तत्परेण ॥ २ ॥

ये रात्रौ सर्वदाऽऽहारं वर्जयन्ति सुमेधसः । तेषां पक्षोपवासस्य फलं मासेन जायते ॥ ३ ॥

अत एव दुर्लभमनुष्यभवादिसामग्रीं लब्ध्वा तपः कार्यम्, तपस्करणाभावे निष्फलं जन्म । यतः—

स्थाल्यां वैडूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः ।

छित्त्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्तादायातः कर्मभूमौ न चरति विपुलं यस्तपो मन्दभाग्यः ॥४॥

तपसि वर्षोपवासकायोत्सर्गकूइडाहुबलिढंढणकुमारगजसुकुमालादीनां दृष्टान्ताः स्वयं वाच्याः ।

॥ इति तपउपदेशः ॥

*-*-*

दुःखव्यूहापहाराय सर्वेन्द्रियसमाधिना । आरम्भपरिहारेण तपस्तप्येत शुद्धधीः ॥ १ ॥

यतः—

यद् दूरं यद् दुराराध्यं यच्च दूरे व्यवस्थितम् । तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥ २ ॥

तपस्विना क्रोधपरिहारः सर्वथा कार्य एव । विपुलं तपः क्रोधकृशानुः श्रीखण्डभारवद्दहति । यतः—

फरुसवयणेण दिणतवं अहिखिवंतो हणइ मासतवं । वरिसतवं सवमाणो हणइ हणंतो अ सामन्नं ॥ ३ ॥

एकेन दिनेन तनोस्तेजः षाण्मासिकं ज्वरो हन्ति । कोपः क्षणेन सुकृतं यदर्जितं पूर्वकोट्याऽपि ॥ ४ ॥

जं अज्जियं चरित्तं देसूणाइ य पुव्वकोडीओ । तं पुण कसायमित्तो हारेइ नरो मुहुत्तेणं ॥ ५ ॥

द्रुमोद्भवं हन्ति विषं न हि द्रुमं नवा भुजङ्गप्रभवं भुजङ्गमम् ।
अदः समुत्पत्तिपदं दहत्यहो ! महोल्बणं क्रोधहलाहलं पुनः ॥ ६ ॥

कषायदेहकारायां चत्वारो यामिका इव । यावत् जाग्रति पार्श्वस्थास्तावन्मोक्षः कुतो नृणाम् ? ॥७॥
नाऽऽशाऽम्बरत्वे न सिताम्बरत्वे न तत्त्ववादे न च तर्कवादे । न पक्षसेवाश्रयणेन मुक्तिः कषायमुक्तिः किल मुक्तिरेव॥८॥
दृष्टान्तः कूरगडूकमुनेः ॥ इति तपउपदेशः ॥

## अथ तपउद्यापनोपदेशः ।

प्रासादे कलशाधिरोपणसमं बिम्बे प्रतिष्ठोपमं पुण्यश्रीस्फुटसंविभागकरणं विप्रद्विशिष्टे जने ।
सौभाग्योपरिमञ्जरीप्रातिनिभं पूर्णे तपस्याविधौ यः शक्त्योद्यमनं करोति विधिना सम्यग्दृशां सोऽग्रणीः ॥१॥
शुद्धं तपः केवलमप्युदारं सोद्यापनस्यास्य पुनः स्तुमः किम् । हृद्यं पयो धेनुगुणेन तत्तु द्राक्षासिताचूर्णयुतं सुधेव ॥२॥
सिंहस्तपःप्रक्रम एव तावद् दुष्कर्मदन्तावलमण्डलीनाम् । तदद्य तस्मिन् प्रखरा निवेशा यद्यद्युद्यापनविस्तरोऽयम्॥३॥
वृक्षो यथा दोहदपूरणेन कायो यथा सद्रसभोजनेन । विशेषशोभां लभते यथोक्तेनोद्यापनेनैव तथा तपोऽपि ॥४॥
लक्ष्मीः कृतार्था सफलं तपोऽपि ध्यानं सदोच्चैर्जिनबोधिलाभः ।
जिनस्य भक्तिर्जिनशासनश्रीर्गुणाः स्युरुद्यापनतो नराणाम् ॥ ५ ॥

दृष्टान्तो यथा--पेथडदेसाधुना ६८ स्वर्णवर्तुलिका मुक्ताप्रवालभृता ६८ सर्वफलसर्वहाटकादिनाणकपुञ्जक ६८ सर्वजातिपकान्नसुखभक्षिका ६८ दुकूलचीरादिमहाध्वजादिविस्तरसुभगं श्रीनमस्कारफलोद्यापनं कृतं सकललोकविस्मयावहम् । एवमपरैरपि स्वसंपत्त्यनुमानतस्तपउद्यापनाविधौ यतनीयम् ।

॥ इत्युद्यापनोपदेशः ॥

## अथ भावनोपदेशः ।

ज्ञेयान्यङ्गानि दानादीन्येव धर्मनरेशितुः । तस्य तेष्वधुना जीवो भावना सा निगद्यते ॥ १ ॥
दानं तपस्तथा शीलं नृणां भावेन वर्जितम् । अर्थहानिः क्षुधा पीडा कायक्लेशश्च केवलम् ॥ २ ॥
चिरादेकेन दानादिक्लेशैः पुण्यं यदर्जितम् । तस्यानुमोदनाभावात् क्षणादन्यस्तदर्जयेत् ॥ ३ ॥

भावना भरतेश्वरवद्भव्यभोगयोगेऽपि मुक्तिदा, मरुदेवा स्वामिनी भाववशान्मुक्तिं गता कदाऽप्यकृतैकाशनाऽपि। प्रसन्नचन्द्रोऽपि सद्भावात्केवलं प्राप ।

वीरजिणकहियसत्तमपुढवीसव्वट्ठसिद्धिकयजोगो । नंदउ पसन्नचन्दो तक्कालं केवलं पत्तो ॥ ४ ॥

गौतमप्रतिबोधित १५ शततापसानां केवलोत्पत्तिः । भावतो दर्दुरः श्रीमहावीरवन्दनार्थमागच्छन्नश्वपाद-चम्पितो मृत्वा दर्दुराङ्कः सुरः समभूत् । भावेन कपिलः केवली जातः ।

दोमासकणयकज्जं कोडीए वि हु न निट्ठिअं जस्स । छम्मासे छउमत्थो विहरिउं जो केवली जाओ ॥५॥

इति भावे भावनाकुलं सकलं वाच्यं ॥ इति भावनोपदेशः ॥

—:❀:—

थोवंपि अणुट्ठाणं भावविसुद्धं हणइ कम्ममलं । लहुओ वि सहसकिरणो तिमिरसमूहं पणासेइ ॥ १ ॥

यतः—

जा दव्वे होइ मई अहवा तरुणीसु रूववंतीसु । सा जइ जिणवरधम्मे करयलमज्झट्ठिआ सिद्धी ॥२॥

औचित्येन गुणोच्चयः प्रियगिरा दानं गृहस्थक्रमः लक्ष्म्याऽभश्रयसेचनेन विपिनं सामेन तत्त्वज्ञता ।
प्रेम्णा स्त्रीजनविभ्रमः सुमुनिता ब्रह्मव्रतेनाङ्गिनां धत्ते भावनयाश्रितः सफलतां सर्वोऽपि धर्मक्रमः॥ ३ ॥

किं बहुना—वित्तसाध्यमिह दानमुत्तमं शीलमप्यविकलं सुदुर्द्धरम् ।
दुष्कराणि च तपांसि भावना स्वीयचित्तवशगेति भाव्यताम् ॥ ४ ॥

भावस्यैकाङ्गवीरस्य सान्निध्याद्भवः शिवम् । यद्युनैकोऽपि दानाद्यैर्भावहीनैर्घनैरपि ॥ ५ ॥
भावो धर्मस्य हृन्मित्रं भावः कर्मेन्धनानलः । सत्कृत्यान्नघृतं भावो भावो वेत्री शिवश्रियः ॥ ६ ॥
भावइ भरतेसर तर्यो भावइ तर्यो भुजङ्ग । वलकरचीरी भावथी भावइ तर्यो कुरङ्ग ॥ ७ ॥

॥ भावनोपदेशः ॥

जातः श्रीयुतसोमसुन्दरगुरुः श्रीमत्तपागच्छपस्तच्छिष्यावलिमण्डनं विजयते श्रीनन्दिरत्नो गणिः ।
पादाम्भोरुहि रत्नमन्दिरगणिस्तस्यालिलीलाधरस्तल्लब्धप्रभवोपदेशसरिति प्राच्यस्तरङ्गोऽभवत् ॥ ८ ॥

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिश्रीरत्नशेखरसूरि पं०—नन्दिरत्नगणिशिष्यरत्नमन्दिरमुनिगुम्फितायां श्रीउपदेशतरङ्गिण्यां दानशीलतपोभावभेदचतुर्विधजिनधर्मप्रकाशकः पञ्चदशोपदेशपेशलः प्रथमस्तरङ्गः ।

---

१ तत्पादाम्बुजषट्पद इत्यपि ।

## अथ द्वितीयः सप्तक्षेत्रोपदेशरूपस्तरङ्गः ।

तद्यथा—

जिनभवनबिम्बपुस्तकचतुर्विधश्रमणसङ्घरूपाणि । सप्त क्षेत्राणि सदा जयन्ति जिनशासनोक्तानि ॥ १ ॥

तत्र प्रथमं जिनप्रासादोपदेशः ।

जिनभवनं निर्माप्यं सफलीकर्तुं निजोल्लसल्लक्ष्मीम् । धन्यैः स्वपरश्रेयःपुण्योद्यद्बोधिलाभाय ॥ २ ॥

दृष्टान्तो यथा—एकदा कोरण्टकस्थाने वृद्धश्रीदेवसूरयो विक्रमात् सं० १२५२ वर्षे चतुर्मासीं स्थिताः; तत्र मन्त्री नाहडो लघुभ्राता सालिगस्तयोः ५०० कुटुम्बानां च प्रतिबोधस्तत आश्विनसुदिपापनवम्यां तैर्गुरव उक्ताः। प्रभोऽस्माकं गोत्रदेवी चण्डिकाऽधिष्ठात्री सा महिषं मार्गयति, किं करिष्यते ? । गुरुभी रात्रौ चण्डिका प्रत्यक्षीकृत्योक्ता-त्वं पूर्वभवे श्रीपुरे धनसारव्यवहारिवधूः श्राविका पञ्चमीदिने धौतिकानि परिधाप्य बालं पुत्रं व्रजयित्वा देवगृहं प्रति चलिता, पुत्रो दृष्ट्वा निर्यान्तीं त्वां त्वत्पृष्णौ लग्नो जल्पति स्म, तदवसरे महिषस्त्रस्तस्तेन पातितो मारितश्च तव पुत्रः। पुत्रार्त्या त्वमपि मृता चामुण्डा जाता। पूर्वभववैरान्महिषानपरान् किं मारयसि ? दयां

भज, शान्ता भव। सा आह-बहुलकर्माहं जीववधं त्यक्तुं न शक्नोमि। तर्हि मन्त्रिनाहडगृहं त्यज। तया तथाकृतम्। मन्त्रिणा दृढधर्मरङ्गेण ७२ जैनाविहारा नाहडवसहीप्रमुखाः कारिताः कोरण्टादिषु प्रतिष्ठिताः, श्रीदेवसूरिभिः सं० १२५२ वर्षे मन्त्रिणा यावज्जीवं जिनपूजनाद्यभिग्रहो गृहीतः भोजनस्य प्राक् ॥ इति प्रथमः प्रासादोपदेशः ॥ प्रकारान्तरेण यथा—

रम्यं येन जिनालयं निजभुजोपात्तेन कारापितं
मोक्षार्थं स्वधनेन शुद्धमनसा पुंसा सदाचारिणा ।
वेद्यं तेन नरामरेन्द्रमहितं तीर्थेश्वराणां पदं
प्राप्तं जन्मफलं कृतं जिनमतं गोत्रं समुद्द्योतितम् ॥ १ ॥

स्वगृहाणि तु सूघरीऊर्णनाभकाकचटकादयोऽपि सर्वशक्त्याऽपवरकरचनया कुर्वन्ति, एवं नृपादिलोकाश्च; परं भाग्यवान् स एव यः श्रीजिनप्रासादं स्वधनानुमानेनैकमण्डपाद्यष्टोत्तरसहस्रमण्डपमण्डितं कारयति ।

दृष्टान्तो यथा—श्रीआमराजेन गोपालगिरौ ।

श्रीरियं पुरुषान् प्रायः कुरुते निजकिङ्करान् । कुर्वते किङ्करीं तां ये तैरसौ रत्नसू रसा ॥ २ ॥

अनेन श्लोकेन श्रीगुरुमुखात् श्रुतेन श्रीमहावीरप्रासादः कारित एकोत्तरशतहस्तोच्चः सार्द्धतृतीय-कोटिसुवर्णटङ्ककरसन्निष्पन्नश्रीवीरस्वर्णमयप्रतिमाऽलङ्कृतः तद्रङ्गमण्डपे २१ सुवर्णलक्षा लग्नाः मूलमण्डपे तु पञ्चविंशतिसहस्राधिकः सुवर्णलक्षः संवत् ८११ वर्षे एककोटिसुवर्णव्ययेन श्रीबप्पभट्टिसूरीणां सूरिपदं कारितं, तदुपदेशेन श्रीशत्रुञ्जयरैवताचलयात्रोद्धारादि । यतः—

संपइविक्कमबाहडहालपलित्ताऽऽमदत्तरायाई । जं उद्धरिस्संति तहा सिरिसित्तुंजयमहातित्थं ॥ २ ॥

विस्तारः २४ प्रबन्धेभ्यो ज्ञेयः ॥ इति प्रासादकारापकोपदेशो द्वितीयः ॥

ये कारयन्ति जिनमन्दिरमादरेण बिम्बानि तत्र विविधानि विधापयन्ति ।
संपूजयन्ति विधिना सततं जयन्ति ते पुण्यभाजनजना जनितप्रमोदाः ॥ १ ॥

ये प्रधानपुरुषा आदरेण द्रविणव्ययेन नीरानयनसुधाकुट्टनलेपनादिना स्वशरीरेण जिनमन्दिराण्युत्तुङ्गतोरणानि सुवर्णमयादिबिम्बालङ्कृतानि कारयन्ति कुर्वन्ति च जगति त एव जयन्ति नास्तं गच्छन्ति। को भावः-तीर्थंकरगणधरपदवीं भुक्त्वा मुक्तिनगरीमनन्तकालं भुञ्जते । दृष्टान्तो यथा—हेमाचार्यप्रतिबोधितश्रीकुमारपालभूपालेन तारणदुर्गस्तम्भपुरादिषु १४४४ नवीनाः सुवर्णदण्डकलशकलिताः प्रासादाः कारिताः । पत्तने स्वपितृ-

त्रिभुवनपालस्य नामाङ्कितः तिहुणविहारः कारितः ७२ देवकुलिकायुतः तासु २४ प्रतिमा रत्नमय्यः २४ पित्तलमय्यः २४ रूप्यमय्यः १४ भारमय्यः मुख्यप्रासादे १ शत २५ अङ्गुलप्रमाणारिष्टरत्नमयी नेमिनाथप्रतिमा कारिता; तत्र द्रव्यव्ययः ९६ कोटीप्रमाणः । तस्मिन् विहारे प्रत्यहं १८ सहस्र श्रे० छाडाकुबेरदत्त मं० आभड प्र० उदयनआम्बडदेबाहडदेप्रमुखकोटीध्वजव्यवहारिभिः सार्द्धं गीतनृत्यवादित्रपूर्वकः स्नात्रोत्सवं अग्निधौतगज-वडिचीनांशुकप्रभृतिधौतपटादिशृङ्गारः श्रीकुमारपालनृपः करोति स्म । स्वकारितापर ३२ दन्तविहारेषु चैत्यपरि-पाटीमहाध्वजमहापूजादिविस्तारपूर्वं एवं अपरराणकैः ७२ अर्णोराजमांगूझालादिभिः ॥ इति तृतीयोपदेशः ॥

पुनः प्रकारान्तरेण यथा——

श्रीमज्जैनगृहे जिनप्रतिकृतौ जैनप्रातिष्ठाविधौ श्रीजैनस्नपने जिनार्चनविधौ श्रीसङ्घपूजादिके ।
श्रीजैनागमलेखने च सततं श्रीतीर्थयात्रादिके येषां स्वं विनियोगमेति धनिनां धन्यास्त एव क्षितौ ॥ १ ॥

जगति धन्यास्त एव येषां धनं जिनप्रासादादिपुण्यकरणीयेषु लगति । यदुक्तम्——

ज्वलनजलचौरचारणनृपखलदायादबन्दिकोद्वृत्तम् । धन्योऽसौ यस्य धनं जिनभवनादौ शुभे लग्नम् ॥२॥

विशिष्य च प्रासादपुण्यमपारमाहुर्महर्षयः । यदुक्तम्——

काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावन्ति वर्षलक्षाणि तत्कर्त्ता स्वर्गभाग् भवेत् ॥ ३ ॥

परमाणुस्वरूपं लौकिकम्—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते ॥ ४ ॥

नूतनार्हद्वरावासे विधाने यत्फलं भवेत् । तस्मादष्टगुणं पुण्यं जीर्णोद्धारे विवेकिनाम् ॥ ५ ॥

अमुना हेतुना पञ्चचक्रवर्त्तिना मातुः प्रमोदाय प्रतिदिनमेकैकजिनायतनालंकृता भूः,

तथा—संप्रतिर्वर्त्तयामास सौवायुर्वासराण्यहो ! । नव्यकारितषट्त्रिंशत्सहस्रार्हद्गृहैर्मुदा ॥ ६ ॥

श्रीसम्प्रतिनृपस्त्रिखण्डभरतक्षेत्रदिग्विजयं कृत्वा षोडशसहस्रमुकुटबद्धनृपपरिवृत उज्जयिन्यामागतः । पौरकृतप्रौढप्रवेशोत्सवः स्वधवलगृहे प्राप्तः स्वजननीकमलापादे पतितः । स्वमातरं श्यामाननां दृष्ट्वा मत्सदृक्षे पुत्रे मातस्त्वं कस्मान्न हर्षवती, पोट्टलिकपुत्रमाताऽपि उपार्जके पुत्रे प्रमोदाकुला स्यात् । ततस्तयोक्तम्--हे वत्स ! संसारसाधकनरकान्तराज्योपार्जनैर्मम हर्षो न भवति । यथा——

शरीरं स्वरूपं तथा वा कलत्रं धनं मेरुतुल्यं वचश्चारु चित्रम् ।

जिनेन्द्रांह्रियुग्मे मनश्चेन्न दत्तं ततः किं ततः किं ततः किं ततः किम् ? ॥ १ ॥

परं प्रासादं धर्मकार्यं कारयित्वा समागतः स्यात् तदा महाप्रमोदः प्रभवति। तदनु महाज्योतिर्विदः स्वायुः-प्रमाणं पृष्टाः। तैरुक्तम्-वर्षशतम्। मन्त्रिणः पृष्टाः-वर्षशते कियन्तो दिवसाः। तैरुक्तम्-षट्त्रिंशत्सहस्राः। तदनु श्रीशत्रुञ्जयादिषु समकालं स्वप्रधानपार्श्वात्प्रासादा मण्डापितास्तदनु प्रतिदिनं प्रासादनिष्पत्तिशुद्धिं ज्ञात्वा जननी-पादे पतति स्म। सहर्षा कमला तिलकवर्द्धापनादिकं स्वहस्तेन करोति स्म नृपस्य। एवं श्रीसम्प्रतिराजेन सपा-दलक्षाः प्रासादाः कारितास्तेषु ३६ सहस्रा नवीनाः, सिद्धपुरादिषु श्रीनेमीश्वरविहारादयो गजघरनर-घराश्वघरादिमण्डिताः प्रासादाः शेषाः ८९ सहस्रा जीर्णोद्धाराः, सपादकोटिबिम्बानि कारितानि। सांप्र-तं सिन्धुदेशे मरोटपुरे ९५ सहस्रप्रतिमाः पित्तलमय्यो बृहत्यः सन्ति, तन्मध्यसत्कं श्रीमहावीरबिम्बं गिरिनारे खरतरवसतौ विद्यते संप्रतिना दानशालानां सप्तशतानि मण्डितानि, जिनधर्मप्रवर्त्तनार्थं स्ववण्ठाः साधुसा-माचारीं शिक्षयित्वा साधुवेषधारिणः प्रथमं प्रेषिताः सर्वानार्यदेशेषु पश्चात्सुसाधवः; इत्यादिसुकृतैः स्वधनं जनुश्च सफलितं संप्रतिनृपेण ॥ इति प्रासादोपदेशश्चतुर्थः ॥

जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात्। तस्य नरामराशिवसुखफलानि करपल्लवस्थानि ॥१॥

इत्यादिसुधादेश्यश्रीवादिदेवसूरिसदुपदेशवासितचेतसा सिद्धराजजयसिंहदेवेन सं० ११८३ वर्षे

पत्तनमध्ये श्रीऋषभदेवप्रासादः कारापितः ८५ अङ्गुलऋषभबिम्बयुग् राजविहारनाम्ना । तत्रैकदाऽऽरास-णीय मं० गोगासुतः पासिलः सामान्यवस्त्रो निर्द्धनः पत्तने राजविहारे देववन्दनार्थमागतः प्रौढप्रतिमां वीक्ष्य सविस्मयः श्रीआदिबिम्बं नवति; तदवसरे ९० लक्षहाटकाधिपव्य० छाडापुत्र्या बालविधवदेववन्दनपरश्रा० हांस्या हास्येन प्रोक्तस्त्वमेवंविधं किं नव्यं कारयिष्यसि ?। ततः शकुनग्रन्थिं बध्वा तेनोक्तम्--तदा त्वया भगिन्या प्रतिष्ठामहोत्सवे समागन्तव्यमेव । ओमिति प्रतिपन्नम् । तदनु दशोपवासैरम्बिका आराधिता आरासणाधिष्ठात्री । सन्तुष्टया १६ प्रहरैः स्वर्णखानिषु प्रासादनिष्पत्तियोग्यं स्वर्णदलं तव निस्सरिष्यति, इति वरो दत्तस्तदनु ३ प्रहरैर्दीनार४५सहस्रमानं निर्गतं प्रासादप्रतिमादिनिष्पन्नम् । श्रीदेवसूरिभिः प्रतिष्ठा कृता, तदवसरे हांसी नि-मन्त्रिता । वस्त्रार्पणे स्वधर्मबान्धव मं० पासिलपार्श्वे मेघनादमण्डपो मार्गितः, नवलक्षद्रम्मव्ययात् तया कारितः । तथा सं० ११९८ वर्षे रुद्रमहालयाचिन्ताकारकप्र०आलिगकारितनगरमध्यचतुर्मुखप्रासादः राजविहाराभि-धानप्रदानेन मं० आलिगस्य बहुग्रामग्रासार्पणेन सिद्धभूपतिना स्वीकृतः । श्रीसिद्धपुरे रम्ये सिद्धनृपो देव-सूरिगुरुवचसा तुर्यद्वारं चैत्यं कारितवान् तुर्यगत्यर्थी ॥ इति प्रासादोपदेशः पञ्चमः ॥

जीर्णोद्धारः कृतो येन विभवेन सुचारुणा । जिनाज्ञा पालिता तेन क्लेशकूपारपारदा ॥ १ ॥

मं० जाम्बान्वये सज्जनदण्डनायकः श्रीसिद्धराजेन योग्यतां ज्ञात्वा सुराष्ट्रदेशे व्यापाराय नियुक्तः, तेन नृपम-विज्ञाप्यैव वर्षत्रयोद्ग्राहितेन७२लक्षभीमप्रियद्रव्यव्ययेन गिरिनारे श्रीनेमीश्वरस्य विद्युत्पातविनाशितं काष्ठमयं पूर्वप्रासादमपनीय नूतनः प्रासादः कारितः। तदनु केनचित्खलेन राज्ञो विज्ञप्तम्। राज्ञः पुराऽपि सोमनाथाभि-ग्रहोऽभूत्तदनु पत्तनतः सोमनाथं नत्वा संकल्यां गतः सज्जनः संमुखमागतः प्रणामः कृतश्च, राजा पश्चाद् विलोकितम्। ततः साजणेन चिन्तितम्--रुष्टो राजा मदुपरि। एवं सति वामनस्थलीवास्तव्यश्रे०सामन्तादिव्यवहारिपार्श्वे गत्वा यावत्प्रमाणं व्ययितं, तावत्सज्जीकृतं धनं तदनु राज्ञा आलिगप्रधानः पृष्टः-कोऽयं पर्वतः, किं तीर्थम्?। तेनोक्तम्--देव! श्रीगिरिनारतीर्थं समुल्लङ्घ्य न गम्यते। ततश्चटितो राजा नवीनं मनोहरं प्रासादं दृष्ट्वोवाच-तस्य जननी धन्या येनेदं कारितम्। पृष्णिरथेन साजणेनोक्तम्। माता मयणल्लदेवी धन्या यया एवंविधं पुरुषरत्नं प्रसूतम्। एवं वचः श्रुत्वा राज्ञा संमुखं विलोक्योक्तम्--किमिदम्। मन्त्रिणोक्तम्-स्वामिन्! गिरिनारप्रासादजीर्णोद्धारपुण्यं सज्जोपढौक्यमा-नोद्ग्राहितद्रव्यप्रमाणद्रव्यं वा द्वयोर्मध्ये एकतरमवधारयतु। तेनेति विज्ञप्ते सिद्धाधिपस्तद्वचनरञ्जितस्तीर्थोद्धा-रपुण्यमेवाङ्गीचकार। १२ ग्रामा देवभाण्डागारे समर्पिताः पूजार्थं प्रासादरक्षार्थम्। ततः पुनरप्यधिकारमधिगम्य श्रीशत्रुञ्जयरैवतमहातीर्थयोर्दुकूलमयी १२ योजनावध्येकध्वजा दत्ता। व्यवहारिभिस्तद्द्रव्येण वामनस्थल्यां

श्रीवीरादिप्रासादचतुष्टयं कारितम् । एवमपरैर्जिनविहारः कार्यः । इति प्रासादोपदेशः षष्ठः ।

यावत्तिष्ठति जैनेन्द्रं मन्दिरं धरणीतले । धर्मस्थितिः कृता तावत् जैनसौधविधायिना ॥ १ ॥

देवसूरयो मेडताग्रामे चतुर्मासकं कृत्वा फलवर्द्धिग्रामे मासकल्पं स्थिताः । तत्रैकदा श्रे० पारसेन तत्रत्यजालिमध्ये स्मिताम्लानपुष्पार्चितो लेष्टुराशिर्दृष्टः। गुर्वादेशेन स विरलीकृतः, पार्श्वबिम्बं दृष्टं, स्वप्ने श्रीपार्श्वेनोक्तम्--मम प्रासादं कारय, मामर्चय, पार्श्वेन स्वद्रव्याभावे उच्यमाने मदग्रढौकिताक्षतस्वर्णीभवनेन द्रव्यं बह्वपि भावीति प्रत्ययो दर्शितः। ततः कारितः। एकपार्श्वे मण्डपादि सर्वं निष्पन्नं, तावता तत्पुत्रेणाऽऽगृह्य द्रव्यागमस्वरूपे पृष्टे पारसेन यथावत्कथिते तत्सुवर्णीभवनं स्थितम् । द्रव्याभावात्प्रासादस्तावानेव तस्थौ। सं० ११९९ वर्षे फाल्गुनशु० १० दिने बिम्बस्थापनं, सं० १२०४ माघसुदि १३ ध्वजारोपः, फलवर्द्धिपार्श्वस्थापना, अजमेरुनागपुरादिश्राद्धाः सर्वे चिन्ताकराः संजाताः ॥ इति सप्तमोपदेशः ॥

कारयन्ति जिनेन्द्राणां तृणावासानपीह ये । मणिरत्नविमानानि ते लभन्ते भवे भवे ॥ १ ॥

माणिक्यहेमरत्नाद्यैः प्रासादान् कारयन्ति ये। तेषां पुण्यैकमूर्त्तीनां को वेद फलमुत्तमम् ? ॥ २ ॥

दृष्टान्तो यथा--श्रीविमलदण्डनायको गूर्जरत्राधिपश्रीभीमप्रधानः खलदूषितराजचित्तं ज्ञात्वा रात्रौ पत्तनात्

पञ्चशतसाराश्वपरिवृतः पञ्चकोटिहेमोष्ट्रशम्बलो नष्ट्वा चन्द्रावत्यां गतः; तन्नीत्या १८शताधिपधारावर्षनृपो नष्टः सिन्धुदेशे गतः; तदनु तदावासे स्थितस्तत्रत्यमाण्डलिकैस्तत्र नृपतिः कृतः; प्रबलसैन्यः शाकम्भरीमेदपाटजावालिपुरादिनृपतिशतं साधयित्वाऽर्बुदोपरि च्छत्रमधारयत् । तेनैकदा रोमनगराधिप१२सुरत्राणा अकस्मान्महासैन्यमेलापकं कृत्वा सुप्ता एव वेष्टिता युद्धे भग्नाः किङ्कराः संजाताः; तत्सत्कद्वादशातपत्राणि स्वशीर्षोपरि धारितानि । तद्यथा—

त्रिलक्षोत्तमवाजीन्द्रो विमलो दण्डनायकः । अभूमिपातिगव्यूतपञ्चकासादिसायकः ॥ ३ ॥
प्राग्वाटवंशमूर्द्धन्यो भूपालशतसेवितः । अम्बादत्तवरः क्षोणीं शास्ति दुर्द्धरविक्रमः ॥ ४ ॥ (युग्मम्)

तद्देवावसरवादितताम्रनिःस्वानप्रतिच्छन्दधडहडिताबुदनिर्घातश्रवणभीतः प्रह्लादनपुरस्थभीमनृपः कोटिद्रव्यं प्राभृतीचकार स्वप्रधानप्रेषणपूर्वम् । श्रीविमलेन स्वामिद्रोहपरिहारकृतज्ञेन गूर्जरत्रायाममरधीरप्रदत्ता मज्जननीजन्मभूमिरिति मत्वा प्रधानाः परिधाप्य पश्चात्प्रहिताः । एकदा चउहिं ठाणेहिं नरयाउअं बज्झन्ति जीवा, तं जहा—महारंभयाए महापरिग्गहाए कुणिमाहारेणं पंचिंदियवहेणमित्यालापकं श्रीधर्मसारसूरिमुखात् श्रुत्वा पापभीतः पादे पतितः संग्रामाहतमनुष्यसहस्रादिमहापापालोचनां जग्राह । सर्वजी-

वाभारिप्रवर्त्तनप्रासादकारापणादिपुण्यकरणीयानि कार्याण्यनवरतमिति गुरुभिरादिष्टम् । तदनु श्रीअम्बा समाराधिता प्रसन्ना जाता वरं वदेति वदन्ती मन्त्रिणा पुत्रप्राप्तिप्रासादनिष्पत्तिवरद्वयं मार्गितम्। देव्योक्तम्--प्रासादं पुत्रं वा ददामि, न द्वयं, तथाविधकर्माभावात्। श्रीदेवी भार्या पृष्टा। तयोक्तम्-प्रासाद एव न तु पुत्रः, श्वानकुलकुर्कुटादिभवे सुलभत्वेन पुत्राणाम्। तदनु श्रीअम्बिका अर्बुदे गता, श्रीमातया सख्या स्वावासे निमन्त्रिता वात्सार्थम्। अम्बिकयोक्तम्-जैनप्रासादं विना मम स्थितिर्न। ततः श्रीमातयाऽम्बिकाया बकुलचम्पकयोरधः ७२लक्षद्रम्मयुता भूमिः समर्पिता। ततोऽम्बिकावचसा चन्द्रावतीश१२सुरत्राणसेव्यविमलेन कुङ्कुमगोमयावलिकाभिज्ञानेन पादः खनितः, ७२लक्षद्रव्यनिधानं निर्गतम्, प्रासादो मण्डितः, परं दिवा कृतो रात्रौ पतति स्म। एवं ६मासाः। स्मृता देवी समागत्योवाच-एतद्भूमिनेता वालीनाहनाग उपवासत्रयेण पूजोपहारयुतेन त्वयाऽऽराधनीयः। निरवद्यनैवेद्यं यदि याचते तदा देयम्, मद्यादि तु नैव; खड्गमाकृष्य भापनीयः। तथा कृतम्। सावद्यनैवेद्यमार्गणे खड्गेऽम्बावताराद् वालीनाहो नष्टोऽम्बावचनेन क्षेत्रपालीभूय स्थितः। निष्प्रत्यूहं प्रासादो निष्पन्नः। सं० १०८८ वर्षे श्रीयुगादिजिनबिम्बं प्रतिष्ठापितम्। स्थापितं मूलनायकत्वेन नागेन्द्रादि४सूरिप्रतिष्ठितदादाऽभिधयुगादिप्रतिमा प्रतिष्ठिता भूमेर्निर्गता श्रीअर्बुदाचलजिनतीर्थमित्यादिपरदर्शनिनां संसूचिकाऽम्बिका खड्गक्षेत्रपालयुता मठे स्थापिता। प्रतिष्ठा कारिता,

तदुत्सवे श्रीसङ्घश्चतुर्विधः पूजितः । मार्गणास्तथा कृतार्थीकृता यथाऽद्यापि विमलश्रीसुप्रभातमित्याशीर्वादं कथयन्ति । कोऽर्थः--विमलो मन्त्री श्रीदेवी भार्या तयोर्यथा सुप्रभातमभूत्तथा भवतामपि । अत्र चारणवचः--

मंडी मुरकी रइ करइ मिह्लिय मंसग्गाह । विमलहिं खंडउं कड्ढिओ नट्ठउ वालीनाह ॥५॥

पञ्चसहस्रीं ददौ । एवमपरैर्भाग्यवद्भिः प्रासादाः कार्याः ॥ इति प्रासादोपदेशोऽष्टमः ॥

सारं तदेव सारं नियुज्यते यज्जिनेन्द्रभवनादौ । अपरं पुनरपरधनं पृथ्वीमलखण्डपिण्डं वा ॥ १ ॥

इह जगति सारं धनं तदेव सारं प्रधानम्, यज्जिनश्रीवीतरागदेवप्रासादेषु नियुज्यते व्ययीक्रियते; अपरं धनं परकीयधनमेव, पृथ्वीखण्डं मलपिण्डं वा ज्ञेयं सत्पुरुषैः । यथा--श्रीवस्तुपालतेजःपालौ प्रथमयात्रायां भूरिसङ्घयुतौ धवलक्ककात् हडालाग्रामे समागतौ, तावता मार्गे धाटीलुण्टाकभीतिः श्रुता, तदा परस्परमालोच्य निशायां रूप्यटङ्ककलक्षभृतताम्रकलशान् गृहीत्वा परमाप्तसेवकैः सह तटाकासन्नगोधूमक्षेत्रमध्यस्थशमीतरुतले समागताः। खनितं तत्र, तावता वस्तुपालभाग्येन निधिः सौवर्णः संमुखो निर्गतः; महान् विस्मयः समजनि; स्वधनं तदपि तत्रैव स्थापितम्; पश्चादागतौ परं चिन्तातुरौ; तदा मं० अनुपमदेव्या चिन्तायाः कारणं पृष्टम् । निर्विजने प्रोक्तं ताभ्याम् । तदनु तयोक्तम्--स्वामिन् ! धनमित्थं न गुप्तीक्रियते, तथा गुप्तीक्रियते यथा सर्वेऽ-

पि पश्यन्ति परं ग्रहीतुं न शक्नुवन्ति । कोऽर्थः--प्रासादाः कार्यन्ते । सत्पुरुषाणामयमेवाचारः । यतः—

अधः क्षिपन्ति कृपणा वित्तं तत्र यियासवः । सन्तस्तु गुरुचैत्यादौ तदुच्चैःपदकाङ्क्षिणः ॥ २ ॥

इत्यादितद्वचनोत्पन्नविवेकाभ्यां ताभ्यां तद्धनं पश्चादानीतं, श्रीसिद्धाचलादिषु प्रासादा मण्डापिताः। तद्यथा—

येन त्रयोदशशतानि नवीनजैनधाम्नां त्रयोदशयुतानि च कारितानि ।
भूमौ शतत्रययुतात्रिसहस्रमानं जैनेन्द्रजीर्णसदनानि समुद्धृतानि ॥ ३ ॥

अपिच—

जैनागारसहस्रपञ्चकमतिस्फारं च पादाधिकं लक्षं श्रीजिनमूर्त्तयस्तु विहिताः प्रोत्तुङ्गमाहेश्वराः ।
प्रासादाः पृथिवीतले ध्वजयुताः सार्द्धं सहस्रद्वयं प्राकाराः परिकल्पिता निजधनैर्द्वात्रिंशदत्र ध्रुवम् ॥ ४ ॥
सत्रागारशतानि सप्त विमला वाप्यश्चतुष्षष्ट्यः उच्चैःपोषधमन्दिराणि सुमुहुर्जैनाश्च शैवा मठाः ।
विद्यायाश्च तथैव पञ्चशतिका प्रत्येकतः प्रत्यहं पञ्चत्रिंशशतानि जैनमुनयो गृह्णन्ति भोज्यादिकम् ॥ ५ ॥

पूर्वं धवलक्कके लूणिगमालदेववस्तुपालतेजःपाला निर्धनाः, लूणिगस्यान्त्यावस्थायां पुण्यव्यये १लक्षनमस्कारा

मार्गिताः स्वकुटुंबपार्श्वे। वस्तुपालेनोक्तम्-अपरं किमपि याचस्व। स आह-अर्बुदतीर्थोपरि विमलवसतौ देवकुलिका-मनोरथ आसीत्, यदि सिद्ध्यति तदा पूरणीयः। तदनु व्यापारे जाते श्रीअर्बुदाचले श्रीमाताबोडिकस्य चन्द्रावतीशधारावर्षराणकस्य च पार्श्वात् वस्तुपालेन ३६ मूढकवीसलपुरीद्रम्मैर्भूराच्छाद्यास्तारिता गृहीता। श्रीमातार्चकाः कथयन्ति स्म-द्रम्मचतुष्ककोणे रिक्ता मही तिष्ठति। एकोऽन्तराले मुक्तः। सैव रीतिर्लोके चालिता द्रम्मस्तारणे। ततस्तत्र प्रासादो मण्डापितः। तदा शोभनसूत्रधारः कथयति स्म-प्रासादपादः हाटकैः पूरितो विलोक्यते। तदा मन्त्रिणा स्वर्णेष्टिका समानीता। शिल्पिनोक्तम्--स्वकोशे स्थापयतु, मया तवौदार्यपरीक्षा कृता। तत आरासणार्बुदान्तराले घृतसमितमोदकाट्टानि मण्डापितानि, पाषाणशाकटिकबलीवर्दसुखार्थं स्थाने २ नीराश्रयाश्च, १५शतशिलाकुट्टकाः कर्मस्थायं कुर्वन्ति, तेषां मर्दनदातारो नापिताः, प्रदीपधारकाश्च प्रत्येकं रीञ्छयादौ कर्मस्थायसिद्ध्यर्थम्; वर्षत्रयेण पूर्णः प्रासादः संजातः। रूप्यसमानाः पाषाणाः पतिताः। सं० १२८३ वर्षे प्रासादारम्भः सं० १२९२ प्रतिष्ठा, १२कोटि ५३लक्षद्रम्मा लग्नाः। लूणिगवसहीनाम दत्तम्; लोकदत्ततेजःपालवसहीत्यपराभिधा। प्रतिष्ठासमाहूतजावालिपुरेशश्रीउदयसिंहनृपप्रधानमं०यशोवीरपार्श्वे श्रीवस्तुपालः प्रासादगुणदोषान् पप्रच्छ। ८४ राणक १२ मण्डलीक ४ महीधर ८४ ज्ञातिमहाजनसभायां स आह-शोभनसूत्रधार! त्वन्मातुः कीर्त्तिस्तम्भे

हस्तोत्तम्भनमयुक्तम् १ । द्रव्यव्ययकारकवस्तुपालमातृहस्तोत्तम्भनं युक्तम्, पुरुषरत्नकुक्षिधारिणीत्वेन; त्वं तु कर्मकर एव द्रव्यलोलुपः । दाता दुर्लभः । यतः—

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता शतसहस्रेषु दाता भवति वा नवा ॥ ६ ॥

अथ त्वत्कृतप्रासादेऽमी दोषाः-स्तम्भस्थबिम्बानामाशातना । २ । गर्भगृहप्रवेशे सिंहाभ्यां तोरणं देवस्य विशेषपूजाऽभावाय । ३ । पूर्वजमूर्त्तीनां जिनपृष्ठे रोपणात् सन्तानिनामृद्धिनाशः । ४ । आकाशे मुनिमूर्त्तिरोपणत्वतः परदर्शनपूजाऽल्पत्वाय । ५ । रङ्गमण्डपे पुत्तलिकासविलासघाटो जिनचैत्येऽनर्हः । ६ । सोपानानि ह्रस्वानि सन्तानाभावं सूचयन्ति । ७ । द्वादशहस्तदीर्घभारपट्टानां भङ्गे प्रासादविनाशः, कलौ तथाविधभारपट्टोद्धारकारापकाभावदर्शनात् । ८ । आद्या गूंहली कृष्णा, स्वस्तिका मङ्गलार्थं कर्पूरादिधवलपदार्थैरेव । ९ । बाह्यद्वारे कसउटीस्तम्भा महार्घ्याः, दुष्टास्तदर्थं प्रासादभङ्गमपि रचयन्ति ।१०। दक्षिणाभिमुखं बलानकम् ।११। मेघमण्डपे प्रतिमाऽत्युच्चत्वेन कदापि पूजां न लभते । १२ । प्रासादान्मठा उत्तुङ्गाः । १३ । हस्तिशालापृष्ठे हस्तीन्द्रा द्वारेऽभव्याः । १४ । इत्यादि श्रुत्वा सत्यं च मत्वा भवितव्यतामप्रतिकारां निश्चिक्ये । ततः स्तौति स्म तम् ।

यशोवीर ! यशोमुक्ताराशेरिन्दुरसौ शिखा । तद्रक्षणाय रक्षायाः श्रीकारो लाञ्छनच्छलात् ॥ ७ ॥

बिन्दवः श्रीयशोवीर! शून्यमध्या निरर्थकाः । सङ्ख्यावन्तो विधीयन्ते त्वयैकेन पुरस्कृताः ॥ ८ ॥

यशोवीर! लिखत्याख्यां यावच्चन्द्रे विधिस्तव । न माति भुवने तावदाद्यमप्यक्षरद्वयम् ॥ ९ ॥

साधर्मिकवात्सल्ये जायमाने म० अनुपमदेव्याः साधून् प्रतिलाभ्य प्रणमन्त्या उपरि समर्दवशात् साधुहस्ताद् घृतभृतपात्रं पतितं, तद्दुकूलमभ्यक्तं सकलम्; तदा तस्मै साधवे गालिः प्रदत्ता वण्ठेन । मन्त्रिण्या क्रुद्धया स्वगृहान्निष्कासितः-अरे ! तैलिकपत्नी कान्दविकपत्नी चेदभविष्यं तदा प्रतिपदं घृतादिमलिनान्येव वस्त्राण्यभविष्यन्; एवं च वस्त्राभ्यङ्गो भाग्यलभ्यः । तदा कुपितं मं० तेजःपालमित्यसान्त्वयत्, तव पत्युः प्रसादात् मुनिजनपूज्यपात्रस्थैः स्नेहैरभ्यङ्गः स्यात् । इति मन्त्री श्रीसङ्घश्चमत्कृतः ।

दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमाऽन्वितं शौर्यम् । त्यागसहितं च वित्तं दुर्लभमेतच्चतुर्भद्रम् ॥१०॥

लक्ष्मीश्चला शिवा चण्डी शची सापत्न्यदूषिता । गङ्गाऽन्यगामिनी वाणी वाक्साराऽनुपमा ततः ॥११॥

इत्यादिजैनादिभिस्तुता आह—

अधीता न कला काचिन्न च किञ्चित् कृतं तपः । दत्तं न किञ्चित् पात्रेभ्यो गच्छत्येव वरं वयः ॥१२॥

एवं सर्वप्रकारैरपरैर्भाग्यवाद्भिः स्वं धनं सफलीकार्यम् ॥ श्रीवस्तुपाललक्ष्मीसफलतासंबन्धाः प्रबन्धेभ्यो ज्ञेयाः॥

इति प्रासादोपदेशो नवमः ॥

स्वैर्द्रव्यैर्जिनमन्दिराणि रचयत्यभ्यर्चयत्यर्हतस्त्रिर्भक्त्या यतिनां तनोत्युपचयं वस्त्रान्नपात्रादिभिः ।
धत्ते पुस्तकलेखनोद्यमसुपष्टभ्नाति साधर्मिकान् दीनाभ्युद्धरणं करोति कलयत्येवं सुपुण्यार्जनम् ॥१॥

इत्यादितपा०श्रीधर्मघोषसूरिदत्तोपदेशवासितचेतसा सं० पेथडदेवेन सं० झाञ्झणदेवेन च सं० १३२१ वर्षे मण्डपदुर्गकरहेटकजीरापल्लीश्रीशत्रुञ्जयादिषु ८४प्रासादाः काञ्चनकलशाञ्चिताः कारिताः । मण्डपे शतत्रयप्रासादे सौवर्णकलशाः कारिताः । तेनैव देवगिरौ ब्राह्मणैरदीयमानजिनप्रासादकरणार्थं तद्देशासन्नओङ्कारपुरे तत्रत्य ५६कोटिनिष्कधनिकरामदेवनृपमहामात्यप्रधानहेमादिनाम्ना बहवः सत्रागारा बहुपक्वान्नशालिदालिघृतघोलकरम्भादिखादिमस्वादिमादिभोज्यसंभारभासुरा मण्डापिताः । तेषु च कर्टीकार्पटिकपथिकाः सोत्कण्ठं भोजनं कृत्वा देवगिरिगमनादनु कलिकालविक्रमादित्यशालिसुगालल‍घुभोजराजशातवाहनवस्तुपालोपमानं दत्त्वा प्रतिगृहं प्रतिहट्टं हेमादेर्गुणप्रशंसनं कुर्वन्ति स्म । प्रधानेन चिन्तितम्--मया तु निजपातकमपि कस्याप्यर्पितं नास्ति, परं दानानुसारिणी कीर्त्तिः, दानं तु कदापि दत्तं नास्ति, परमेतावान् लोको यदि मम सत्रागारं वहमानमाह तर्हि केनापि कारणेन नूनं कोऽपि महापुरुषो मन्नाम्ना वाहयन्नस्ति, तदनु तज्ज्ञानाय प्रहितैर्जनैरागत्योक्तम्--मालवीय

सं० पेथडदेनामा मन्त्री युष्मदभिधया वाहयति सत्रागारम् ।

यतः--

परकीयद्रव्येण प्रचुरतरा रक्षयन्ति नाम निजम् । स्वद्रव्येण परेषां नाम पुनः पञ्चषाः पुरुषाः ॥ २ ॥

इति विचिन्त्य हृष्टहृदयो हेमादिप्रधानस्तत्रागत्याऽवेत्य समग्रं वृत्तान्तं रामदेवनृपवचनेन देवगिरिनगरे चतुष्पथान्तःस्थानमभिलषितं पेथडस्य ददौ । तदनन्तरं तेन नीरं खन्यमानेषु पादेषु निर्जगाम; मधुरिमाऽधरितक्षीरं नीरं पीतं च तदा तकैर्लोकैः। न चैतावता कौतुकम्; पुण्यभाजां हि सर्वत्र निधानान्यपि निर्गच्छन्ति मिष्टपानीयस्य किमुच्यते ?।

पदे २ निधानानि योजने रसकूपिका । भाग्यहीना न पश्यन्ति बहुरत्ना वसुन्धरा ॥ ३ ॥

तदा देवगिरिमध्ये मिष्टोदकाभावात् केनापि पिशुनशुना भाषितं भूपतेः पुरः-स्वामिन्निह मधुरमम्भः प्रादुरभूत्, तेन प्रासादास्पदमन्यत्रार्प्यतामिह वापी कार्यताम्। तदा राज्ञोक्तम्-प्रातरहं तत्रागत्य विलोक्य च कथयिष्यामि। सन्ध्यायां वृत्तान्तमेतद् ज्ञात्वा रात्रावेव तद्दिनागतबहिःस्थबालदिमध्यात्कियल्लवणमानाय्य रहोवृत्त्या क्षिप्तं चान्तः क्षारतरमकारयन्नीरम्; प्रभाते भूपतिरभ्युपेत्य जलं स्वादितवान् निष्ठ्यूतवांश्च क्षारतया। ततो राजाऽऽदेशात्तत्कालं पादानारो-

पयत् पेथडः। कियता कालेन च निष्पन्नः शिखरान्तःस्वर्णकलशदण्डध्वजकान्तः प्रासादो रुद्रमहालयतः स्थिरद्वयेन न्यूनः सं० १३३५ वर्षे सारूआरेति प्रसिद्धघाटमयः; यत्र घाटेऽपरेसामन्याश्चतुरशीतिप्रासादा निष्पद्यन्ते । ततस्तत्कर्मस्थायचिन्ताकारिभिर्वणिक्पुत्रैः सर्वव्ययस्य लेख्यमादातुमारब्धम्, तत्र पूर्वमल्पमूल्यानां द्रवकाणामेव चतुरशीतिसहस्रसङ्ख्याजीर्णटङ्कास्तैरुक्तास्तदा पेथडेन तदनुमानेनापरबहुद्रव्यव्ययं विचार्य लेख्यवहिका नीरे क्षिप्ता। ततो लोकैरमूल्योऽयं विहारः। पेथडेनापि प्रतिष्ठावसरे सर्वजनसमक्षं श्रीगुरुपार्श्वादमूलिकविहारेतिनाम प्रतिष्ठापितम्। तदन्तश्च त्र्यशीत्यङ्गुलप्रमाणमारासणीयं श्रीमहावीरबिम्बमतिष्ठिपत्। इत्यादि सं० पेथडदेझाञ्झणदेप्रासादादिपुण्यकरणीयावदाताः पं० रत्नमण्डनगणिकृतसुकृतसागरकाव्यमध्यगता ज्ञेयाः॥ इति प्रासादोपदेशो दशमः॥

जीर्णोद्धारः श्रुतपरिमलामोदितात्मन्यजस्रं पात्रे दानं भगवति जिनाधीश्वरे नित्यभक्तिः।
दीनानाथोद्धरणमनिशं विश्वविश्वोपकारः प्राणित्राणं फलमिदमहो ! चञ्चलायाः श्रियोऽस्याः॥ १॥

गजकर्णचञ्चलायाः कमलायाः जीर्णोद्धारादि पुण्यं महाफलं ज्ञेयम्। यतः——

राया अमच्च सिट्ठी कुडुम्बिए वावि देसणं काउं। जिन्ने पुव्वाययणे जिणकप्पी वावि कारवइ॥२॥

यथा-- श्रीबाहडदेवमन्त्रिणा श्रीशत्रुञ्जयोद्धाररैवताचलसुगमपद्याकरणभृगुकच्छसमलिकाविहारोद्धार--तीर्थद्वययात्रादि४मनोरथाः स्वपितृमं०उदायनसत्काः सफलीकृताः । तद्यथा--सं०बाहडदेवेन श्रीशत्रुञ्जययात्रार्थं गतेन सकलसंघवात्सल्यार्चापूर्वं प्रासादं काष्ठमयं जीर्णमपनीय पाषाणमयः प्रासादो मण्डापितः । तदनु स्वकोशाधीशानां प्रासादकर्मस्थायं भलाप्य पत्तने नृपकृतप्रवेशमहः समागतः । कियता कालेन वर्द्धापनिकस्तव प्रासादः परिपूर्णः संजात इति लेखहस्तः । तस्य षोडश स्वर्णजिह्वा प्रदत्ताः । पञ्चदिनानन्तरं द्वितीयः समागतः । तेनोक्तम्--हे स्वामिन् ! तव प्रासादो भ्रमतीप्रविष्टवायुना फाटितः, इत्युक्ते तस्य द्वात्रिंशत् सुवर्णरसनाः प्रदत्ताः । परिवारेणोक्तम्--तव विषादस्थाने हर्षः कुतः ? । तेनोक्तं श्रूयताम्--

वेगसरीणां गर्भो दुर्जनमैत्री नियोगिनां लक्ष्मीः । स्थूलत्वं श्वयथुभवं विना विकारेण न भवन्ति ॥ ३ ॥

भूपभ्रूपल्लवप्रान्तनिरालम्बाऽवलम्बिनीम् । स्वल्पावस्थायिनीं लक्ष्मीं मन्यन्ते मन्त्रिणो बुधाः ॥ ४ ॥

ऋषभपञ्चाशिकायामप्युक्तं महाकविधनपालेन——

जा तुह सेवविमुहस्स हन्तु मा ताउ मह समिद्धीओ । अहिआरसंपया इव पेरन्तविडम्बणफलाओ ॥ ५ ॥

व्यापारिणां तु एकः पादो घोटके द्वितीयस्तु खोटके भवत्येवं गोपाला अपि वदन्ति । कदाचिद् व्यापार-

परित्याजनानन्तरं यदि शुद्धिरेवंविधा स्यात् तदा स्वशिरःकण्डूयनं स्वहस्तघर्षणमेव स्यात् । अधुना स्वप्रभु-तया तदधिकं प्रासादं कारयिष्यामि । तेनैषा शुद्धिर्ज्ञाता भृशं वरा । तदनु शिलावर्त्तकस्योक्तम्--भ्रमतीं विना प्रासादं कुरु । तेनोक्तम्--सारूआरघाटप्रासादकारापणे भ्रमतीं विना कारापकसंतानं न भवति । मन्त्रि-णोक्तम्--संतानेन किं प्रयोजनं दुर्गतिवर्द्धापकेन ?। मम प्रासाद एव विलोक्यते। तदनु भ्रमिविरहितः कारितो बहुद्रव्यव्ययेन । तद्यथा——

लक्षत्रयीविरहिता द्रविणस्य कोटीस्तिस्रो विविच्य किल वाग्भटमन्त्रिराजः ।
यस्मिन् युगादिजिनमन्दिरमुद्धार श्रीमानसौ विजयतां गिरिपुण्डरीकः ॥ ६ ॥

इत्थं शत्रुञ्जयोद्धारः कृतः ॥ श्रीकुमारपालः ससंघः श्रीरैवताचले समागतः । सांकलिआलीपद्यापार्श्वे तावता गिरिर्धडहडितः । तदा श्रीहेमसूरिभिर्नृपस्योक्तम्--समकालमधस्तादुपेतस्य पुण्यवत्पुरुषद्वयस्योपरि च्छत्रशिला पतिष्यतीति वृद्धा वदन्ति । तेनाहं पृथक् चटिष्यामि, न त्वत्साधम् । तीर्थे मृतिर्भाग्यलभ्या, परं लोका-पवादः श्रीजिनशासनोड्डाहश्च । पृथक् पृथक् चटितौ सूरिनृपौ । ततः श्रीआम्बडदेवेन जीर्णदुर्गपार्श्वे वृद्धबा-लानां सुखारोहणार्थं सुगमा पद्या रैवताचले त्रिषष्टिलक्षैः कारिता । यतः——

त्रिषष्टिलक्षद्रम्माणां गिरिनारगिरौ व्ययात् । भव्या बाहडदेवेन पद्या हर्षेण कारिता ॥ ७ ॥

भृगुकच्छोद्धारादिप्रबन्धाः स्वयं वाच्याः । एवमपरैर्जीर्णोद्धाराः स्ववित्तानुसारेण कार्याः ॥

इति जीर्णोद्धारोपदेश एकादशः ।



जिणभवणाइं जे उद्धरन्ति भत्तीइ सडियपडियाइं । ते उद्धरन्ति अप्पाणं भीमाओ भवसमुद्दाओ ॥ १ ॥

यथा गोपगिरौ आमनृपः प्रातः स्वमनर्घ्यसिंहासनं बप्पभट्टिसूरये निवेशापयति । तद् दृष्ट्वा विप्रैः क्रुधा ज्वलद्भिर्भूपो विज्ञप्तः--देव ! श्वेताम्बरा अमी शूद्राः, एभ्यः सिंहासनं किम् ? । मुहुर्मुहुस्तैरित्थं कदर्थ्यमानः पार्थिवो मुख्यसिंहासनं नवलक्षाभिधं कोशगं कारयित्वाऽन्यल्लघु आरूरुपत् । प्रत्यूषे सूरीन्द्रेण तद् दृष्ट्वा ज्ञातनृपचित्ताशयेनोक्तं राज्ञोऽग्रे——

मर्दय मानमतङ्गजदर्पं विनयशरीरविनाशनसर्प्पम् । क्षीणो दर्पाद् दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि ॥२॥

इदं श्रुत्वा लज्जितेन राज्ञा मुख्यं सिंहासनं मण्डापितम् । पुनरपि विप्राः कथयन्ति । राज्ञा तत्प्रतिबोधनाय पात्रापात्रपरीक्षार्थं च रूप्यटङ्ककसहस्राष्टकं विप्रदानाय पर्षदि समानीतम् । तदा सर्वेऽपि विप्रा देव ! वयं चतुर्वेद-

वेदिनः पात्रमुत्तममित्यादिस्वगुणोत्कीर्तनपरा मम ददस्व मम ददस्व इति कथयन्त अनाहूता अपि प्रविशन्ति। झटपटं कृत्वा सर्वं गृहीतम्। द्वितीयदिने श्रीसूरीन्द्रा आकारिताः। हेमटङ्ककसपादकोटिः सूरीणामग्रे मुक्ता प्रसादं कुर्वन्तु प्रसादं कुर्वन्तु वारं वारमित्युक्तेऽपि।

दोससयमूलजालं पुव्वरिसिविवज्जिअं जइवन्तं। अत्थं वहसि अणत्थं कीस अणत्थं तवं चरसि ? ॥३॥
आरम्भे नत्थि दया महिलासंगेण नासए बम्भं। संकाए समत्तं पव्वज्जा दव्वगहणेणं ॥ ४ ॥
लाभ कलन्तरि चिन्तविओ गण्ठि बन्धिउ दम्म। नवि खमणउ नावि सेवडउ गिऊ अकयत्थ उ जम्म॥५॥
संजय मेली रिद्धिडी जिहि मूकी तिहि जाइ। पेटि भ्रसकउ हियइं भय भीखी भगरिजि खाइ ॥६॥

इत्याद्युक्त्वा निर्लोभत्वाद् न गृहीता। तदा नृपेण विप्रादिसमक्षमुक्तम्—यदीदृशानां निरीहशिरोमणीनां सिंहासनं न मण्ड्यते, तदाऽन्यस्य कस्य मण्ड्यते ?। तदनु तद् द्रव्यं नृपः कोशे न स्थापयति। गुरुवचसा शत-विहारजीर्णोद्धाराः कारापिताः ॥

इति जीर्णोद्धारोपदेशो द्वादशः ॥

यस्तृणमयीमपि कुटीं कुर्याद् दद्यात् तथैकपुष्पमपि । भक्त्या परमगुरुभ्यः पुण्योन्मानं कुतस्तस्य ? ॥ १ ॥
किं पुनरुपचितघनशिलासमुद्घातघटितजिनभवनम् । ये कारयन्ति शुभमतिविमानिनस्ते महाधन्याः ॥ २ ॥

प्रासादकर्मस्थायकारकः कीदृशो विलोक्यते, तदाह—

न्यायोपार्जितवित्तो मतिमान् स्फीताशयः सदाचारः । गुर्वादिमतो जिनभवनकारकस्याऽधिकारी स्यात् ॥ ३ ॥

इत्यादिगुणभाक् । यथा--राजगृहनगरे धनसारगुणसारौ द्वौ बान्धवौ । वृद्धस्य धनी शीलादिगुणभूषिता, लघोर्भार्या काली परं दुष्टत्वेन कालिकैव । तद्वचसा लघुः पृथग्भूय मुख्यगृहे स्थितः, वृद्धस्त्वपरगृहे । दैवानुभावाद् निर्धर्मस्यापि लघोर्बहुला लक्ष्मीर्बभूव, वृद्धस्याऽल्पा लक्ष्मीः । एकदा ग्रामान्तरनिवासिनः शिलाकुट्टकाः समागताः । गुणसागरगृहद्वारस्थवस्त्राद्यनेकालङ्कारधारिकालीं वीक्ष्य तां प्रणम्य तत्पार्श्वे पृष्टम्--स्वामिनि ! कोऽप्यत्रास्ति प्रासादकारयिता ? । तया धनयौवनमदेन हास्यार्थं निर्धनस्वज्येष्ठगृहे प्रहिताः । धन्या तदाऽऽगमनकारणपृच्छापूर्वं स्थापिताः । भोजनार्थागतधनसारेण ते दृष्टाः, धनी पृष्टा, तदा देवरजायाप्रेषणादिप्रोक्तम् । तदनु तदाभरणैः प्रासादो जीर्णः समुद्धृतः । प्रतिष्ठाव्ययार्थं धनार्जनाय देशान्तरं गच्छन् मार्गे कस्यापि योगिनो मिलितः । तदुक्तकल्पविधिना योगिना सार्धं योगिकृतमाहिषीपुच्छदीपिकाद्योतेन श्रीपर्वतगुहायां प्रविष्टः । अन्तरा वृश्चिक-

भ्रमरेन्दुरस्त्रीभिर्भृशमुपसर्गितोऽपि शीलव्रतधारी साहसिकत्वेनाऽग्रे गतः । योगी स्त्रीमोहितः स्थितस्ताभिरुच्छाल्य चूर्णीकृतः । गुहान्तराले कनकमयसप्तभूम्यावासे हीण्डोलाट्टखट्वायामासीनं महानीलव्यन्तरेन्द्रं ददर्श । सुरेण बहुमानदानपूर्वं स्वसमीपे उपवेशितः । अहो ! श्रेष्ठिन् ! त्वं मम भ्राता समागतः । पूर्वजन्मन्यहं जिनदासव्यवहारी राजगृहे अभूवम् । मयैष प्रासादः कारितस्त्वयैष समुद्धृतः । ततो रत्नपोट्टलिकप्रदानपूर्वमुत्पाट्य श्रेष्ठी स्वगृहे मुक्तः । तदनु प्रतिष्ठामहोत्सवे श्रीगुरुसंघस्वजनपरिधापनपूर्वं रत्नखचितस्वर्णजिह्वा काल्यै प्रदत्ता । संघादिलोकैः कारणं पृष्टम् । तेनोक्तम्--अस्माकं कालीजिह्वाप्रसादात् जीर्णोद्धारधनप्राप्त्यादिमाङ्गलिकानि जातानि । तदनु यावज्जीवं तद्धनं सफलीचक्रे । प्रान्ते दीक्षां लाला सभार्यः प्रथमे देवलोके सुरः समभूत् ॥

इति जीर्णोद्धारोपदेशस्त्रयोदशः ।

जिनालयसमीपवर्तित्वेन पौषधशालोपदेशानाह—

पुण्याट्टं पौषधागारं तत्रैत्य श्राहको जनः । व्रतादिपण्यं क्रीणाति क्रमेणाऽनन्तलाभदम् ॥ १ ॥

धर्मश्रुतिप्रतिक्रान्तियतिस्थितिपुरस्सराः । यास्तत्र स्युः क्रियास्तज्जपुण्यपारो न विद्यते ॥ २ ॥
कलिबुद्धिः कुरुक्षेत्रे यथा स्नेहवतामपि । तथा स्याद् धर्मशालायामधमस्याऽपि धर्मधीः ॥ ३ ॥

दृष्टान्तो यथा--सं०पेथडदेजनकः कनकजलधरबिरुदः सं०देदः कस्मैचित् कार्याय देवगिरिं पुरीं प्राप । तत्र गुरून् नन्तुं काऽप्युपाश्रये गतः । गुरवो वन्दिताः । तत्रैकस्थानोपविष्टान् पौषधशालानिर्मापणविचारं कुर्वतः श्राद्धानप्यवन्दत । तद्विचारमाकर्ण्य श्रीसंघस्याञ्चलयाचनां विदधे--मह्यं प्रसादः क्रियताम्, अहं पौषधशालिकां विधापयामि संघस्य किङ्करोऽस्मि । तेषु मुख्यस्तदाचख्यौ--यूयमजल्पत यौक्तिकमेव, परं सा सकलसंघनिष्पादिता स्याद्, न त्वेकस्य । यस्तामेकः कारयति, स शय्यातरः स्मृततद्गृहादन्नादिकं न लान्ति यतयः । बहूनां शालाकारापणे प्रतिदिनमेकैकं गृहं त्यजन्ति तथा च वरम् । इत्यादियुक्तिभिः सभ्यैर्बोधितोऽपि न त्यजति कदाग्रहं यदा सः, तदा कोऽपि श्राद्धः क्रुद्धोऽवदत्--भोः ! यद्यत्र कोऽपि कारयिता न स्यात्तदा कदाग्रहो भव्यः, कारयितारोऽत्र बहवोऽपीष्टकामयीं शालां, सौवर्णी तु युष्माभिरपि सा न कारयिष्यते । श्रुत्वेदं संघपादे लगित्वा सौवर्णीं कारयिष्यामीति वदन् स्वीचकार शालानिष्पादनम् । संघेनाऽनुमतिः प्रदत्ता । तथाविधद्रव्यं क ? महीभुजामानुकूल्यं क ? श्रेयांसि बहुविघ्नानि ।

उत्पद्य कलिकालान्तः कार्यं कृतयुगोचितम् । कुर्वाणस्याऽन्तरायो हि प्रायो बाधाय जायते ॥ ४ ॥

इत्यादि युक्तिभिर्गुरुभिः प्रतिबोधितः। पुनरपि देदोऽवग्--भगवन्! किं त्विष्टकामयी विधापयिष्यते, हेमपत्रैश्च जटयिष्यते। जगुस्तं गुरवः--मुञ्च एनमाग्रहं, कलौ तदपि बह्वपायाकुलम्। वारितो गुरुभिर्देदो भ्रातृजस्वर्णाभिधानेन तां कारयितुमारेभे। सुधामध्ये मणशतकेसरं क्षिप्तम्, तेन पीतवर्णा समभूत्; ५२सहस्राष्टङ्ककानां लग्नाः। तदनु कूङ्कूलोलशालेति प्रसिद्धिं प्राप ॥

इति पौषधशालोपदेशः प्रथमः।

---

यस्तनोति वरपौषधशालां सर्वसिद्धिललनावरमालाम्।
सर्वदैव लभते सुविशालां बोधिबीजकमलां विमलां सः ॥ १ ॥

यथा--गोपगिरौ बप्पभट्टिसूरिप्रतिबोधितश्रीआमनरेश्वरेण सहस्रस्तम्भमयी साधुश्राद्धश्राविकासुगमप्रवेशनिर्गमप्रवरद्वारत्रयमण्डिता दूरदूरतरपट्टशालोपविष्टसाधूनां प्रतिलेखनास्वाध्यायादिसप्तमण्डलीवेलाज्ञापकमध्यस्तम्भबन्धितमहाघण्टाटङ्कारटणत्कारकारिणी पौषधशाला कारिता। तस्यां च व्याख्यानमण्डप-

खिलक्षद्रव्येण ज्योतीरूपमणिशलाञ्छन्नश्चन्द्रकान्तमणिकुट्टिमः १२सूर्यवद् निशायां सर्वतमोपहः पुस्तिकाक्षरवाचनसूक्ष्मबादरत्रसजीवविराधनानिवारकलादिना बहुनिरवद्यतरः कारितः ॥

इति द्वितीयः पौषधागारोपदेशः ।

---

पापनिष्कन्दनं धर्मसदनं कारयन्ति ये । तारयन्ति भवाब्धेः स्वं ते जनाः कुलतेजनाः ॥ १ ॥

एकदा पत्तने श्रीजयसिंहदेवसर्वाङ्गमुद्राव्यापारभृत् पञ्चसहस्रतुरङ्गमाधिपतिः मं०सांतूः श्रीदेवसूरिगुरुभक्तश्चतुरशीतिसहस्रटङ्कव्ययेनाऽत्यन्तापूर्वं राजधवलगृहसमानं गृहं कारितवान् । अवलोककलोकलक्षैर्व्याख्यायमानं स्वगुरोरदीदृशत् । गुरूणामव्याख्याने कारणं पृष्टं मन्त्रिणा । तदा सौभाग्यनिधानमाणिक्यक्षुल्लेनोक्तम्—मन्त्रिन्! यद्येवंविधा पौषधशाला स्यात् तदा गुरुभिर्व्याख्यायते, न तु गृहं सर्वपापारम्भखण्डणीपोषणीचुल्लीजलकुम्भप्रमार्जनीरूपषट्कशालापञ्चकस्थानम् । ततस्तेन पौषधशालैव कृता । यत् पट्टशालायां द्वौ पुरुषप्रमाणौ दर्पणौ स्तः ॥

इति तृतीयोपदेशः ।

कारयन्ति नरा धन्या भावात् पौषधशालिकाम् । संसारसागरं तीर्त्वा ते लभन्ते परं पदम् ॥ १ ॥

यथा—पत्तने आभडविसा निर्धनः कांस्यकारकाऽट्टे घुर्घरान् घर्षयित्वा प्रतिदिनं द्रम्मपञ्चकार्जनेन कुटुम्बनिर्वाहं करोति । स एकदा परिग्रहपरिमाणं गृह्णन् ७शतद्रम्मानेव मुत्कलीकुर्वन् श्रीहेमसूरिभिः सामुद्रिकबलात् त्रिलक्षनियमं ग्राहितः । तदनु पुत्रो जातः, तत्स्तन्यपानार्थं वर्याऽजामानेतुं ग्रामं गतः । तत्र निपानेऽजावृन्दमध्येऽजामेकां घण्टिकामध्यस्थेन्द्रनीलमणिकिरणनिर्मीयमाणनीलावाहजलां जग्राह, पश्चादागतः । मणिरुद्द्योतितो मणिकारपार्श्वात् । सिद्धराजेन शृङ्गारकोटीहारमध्यपदकस्थानस्थापनार्थं सपादलक्षेण गृहीतः । तेनैवैकदा मञ्जिष्ठाज्ञादिकानि गृहीतानि, विक्रये स्वर्णकम्बिका निर्गता । कोटीश्वरः संजातः । परिग्रहपरिमाणं संभाल्य ८४पौषधशाला नव्यसंजातश्राद्धक्षेत्रेषु कारिताः; २४वृषभादिवर्धमानान्तजिनमूलनायकाः प्रासादाश्च । प्रतिदिनप्रासुकाक्रीतघृतघटविहारणं सकलसुविहितानां क्षमाश्रमणदानपूर्वम् । प्रान्ते ९०लक्षाः सप्तक्षेत्र्याम् । इत्याभडपौषधशालाप्रबन्धः ॥ तथा स्तम्भतीर्थे श्रीभीमसाधुना मध्यस्थानाभावे पुराद् बहिर्बहुद्रव्येण श्रीखण्डदन्तमयालयमण्डिता पौषधशाला कारिता । तदा परैः प्रोक्तम्—वने भिल्ला एव वासं करिष्यन्ति, मुधा द्युम्नव्ययः कृतः । तेनोक्तम्—नहि, कश्चित् खिन्नः पौट्टलिको विश्रामं गृहीष्यति । सामायिकं

लात्वा नमस्कारस्मरणं करिष्यति; एतावता सर्वं वलिष्यति । सा संप्रति पुरमध्ये पुरवृद्ध्या समागता । एवं श्रीवस्तुपालेन पौषधशालासप्तशती कारिता । एवमपरैर्भाग्यवद्भिः पोषधशालाकारापणोद्यमः कार्यः ।

इति पोषधशालोपदेशश्चतुर्थः ॥



अथ जिनबिम्बोपदेशास्तद्यथा——

अङ्गुष्ठमानमपि यः प्रकरोति बिम्बं वीरावसानवृषभादिजिनेश्वराणाम् ।
स्वर्गे प्रधानविपुलर्द्धिसुखानि भुक्त्वा पश्चादनुत्तरगतिं समुपैति धीरः ॥ १ ॥

यः श्रीआदिनाथादिजिनबिम्बं पञ्चशतधनुःप्रमाणमङ्गुष्ठप्रमाणं वा कारापयति, स स्वर्गसौख्यानि भुक्त्वा मुक्तिं लभते । यथा—श्रीभरतचक्रिणा स्वाङ्गुलीयपाचिमणिमयी श्रीआदिनाथप्रतिमा कारिता, साऽद्यापि देवगिरिदेशे कुल्यपाके माणिक्यस्वामीति प्रसिद्धा ।

अष्टापदाद्रिशिखरे निजनिजसंस्थानमानवर्णधराः । भरतेश्वरनृपराचिताः सद्रत्नमया जयन्तु जिनाः ॥ २ ॥
तथा—श्रीब्रह्मेन्द्रकृतेयं श्रीनेमेर्मूर्त्तिरमरगणपूज्या । विंशतिसागरकोटीः स जयति गिरिनारगिरिराजः ॥ ३ ॥

तथा श्रीसंप्रतिनृपेण सपादकोटिजिनबिम्बानि कारितानि । श्रे० जावडिना स्वपितुः श्रेयसे १९लक्षस्वर्णव्ययेन श्रीशत्रुञ्जये मम्माणिमयश्रीयुगादिदेवप्रतिमाङ्घ्रिपुण्डरीकप्रतिमाः कारिताः श्रीवज्रस्वामिप्रतिष्ठापिताः सं० १०८ वर्षे । यतः—

अष्टोत्तरे च किल वर्षशते व्यतीते श्रीविक्रमादथ बहुद्रविणव्ययेन ।
यत्र न्यवीविशत जावडिरादिदेवं श्रीपुण्डरीकयुगलं भवभीतिभेदि ॥ ४ ॥

विस्तरः प्रबन्धाज्ज्ञेयः । एवमपरैर्जिनप्रतिमा कार्या ॥ इति जिनबिम्बोपदेशः प्रथमः ॥

भो भव्याः ! भवभीमसागरगतैर्मानुष्यदेशादिका सामग्री न सुखेन लभ्यत इति प्रायः प्रतीतं सताम् ।
तद्युष्माभिरिमां पुरातनशुभैरासाद्य सद्योऽनघां सर्वज्ञप्रतिमादिके प्रतिदिनं धर्मे कुरुध्वं मनः ॥ १ ॥

मानुष्यकादिसामग्रीं चुल्लगादिदशदृष्टान्तदुर्लभां ज्ञात्वा श्रीवीतरागबिम्बादिधर्मे यत्नः कार्यः । यतः—

भवकोटीदुष्प्रापामवाप्य नृभवादिसकलसामग्रीम् । भवजलधियानपात्रे धर्मे यत्नः सदा कार्यः ॥ २ ॥

यथा श्रीवस्तुपालमन्त्रिणा स्तम्भपुरपरिसरागतमोजदीनसुरत्राणजननी पूर्वं लुण्टापिता, पश्चात् सर्वं पश्चाद्दा-

लनपूर्वं परिधाप्य हजं यावत्सार्द्धं गत्वा तत्र त्रिलक्षतोरणं काराप्य पश्चात्संप्रेपिता ढिल्लीं प्राप्ता संमुखागतमोजदीनसुरत्राणेन पृष्टा-हे अम्ब ! सुखेनाऽऽसीद् यात्रा । तयोक्तम्-स्वधर्मपुत्रश्रीवस्तुपालप्रसादात् । तदनु सुरत्राणेन बान्धवता प्रतिपन्ना । वस्तुपालो ढिल्ल्यां स्वयं संमुखागमनपूर्वं महोत्सवेनाऽऽकारितः । स्वार्द्धराज्ये दीयमाने मन्त्रिणा नागपुरासन्नमम्माणिखाणिप्रतिमात्रयं मार्गितम् । ततस्तुष्टेन खाणिः समर्पिता । ततः स्वस्थानमागत्य मम्माणीयश्रीशत्रुञ्जययुगादिप्रतिमापुण्डरीकप्रतिमातेजलपुरपार्श्वप्रतिमात्रयं प्रतिष्ठाप्य पूज्यं कृतम् । वस्तुपालमन्त्रिणाऽपि सपादलक्षप्रतिमा रत्नस्वर्णरूप्यपित्तलारासणीयपाषाणमम्माणीमय्यः कारिताः प्रतिष्ठापिताः स्वहस्तप्रपूजिताः स्वकारितपञ्चसहस्रजिनप्रासादेषु संस्थापिताः ।

इति द्वितीयो बिम्बोपदेशः ॥

पूइज्जइ जिणपडिमा निच्चं भव्वेहिं जेहिं कारविआ । वड्ढेइ तेसिं पुन्नं कलंतरेणं व धणनिवहो ॥ १ ॥

यैः स्वकारितजिनप्रतिमा स्वहस्तेन पूज्यते, जिनालयस्थापनेनापरपार्श्वात् पूजाप्यते, तेषां पुण्यं प्रतिदिनं प्रवर्द्धते, व्याजदत्तधनवत्, तथा जिनार्चाकर्तुः कुजात्यादिकं विरूपं न स्यात् ।

यतः—

दालिद्दं दोहग्गं कुजाइकुसरीरकुमइकुगईओ । अवमाणरोगसोगा न हुंति जिणबिम्बकारीणं ॥ २ ॥

यथा—स्वर्णकारजीवेन पञ्चशैलद्वीपहासापरहासाव्यन्तरीपतिना स्वह्वीनसुरत्वक्षेपणार्थं देवाधिदेव-श्रीवीरप्रतिमा बावन्नचन्दनमयी कृत्वा वीतभयपत्तनाधिपउदायनराज्ञो राज्यै प्रभावत्यै समर्पिता । तया त्रिकालं गीतनृत्यपूर्वं पूजिता । सा राज्ञी तत्पुण्येन प्रथमदेवलोके सुरी जाता । सोऽपि स्वर्णकारसुरः सद्गतिभाग् भविष्यति ।

॥ इति बिम्बोपदेशस्तृतीयः ॥

—*०*—

जो कारवेइ पडिमं जिणाण जिअरागदोसमोहाणं । सो पावइ अन्नभवे सुहजणयं धम्मवररयणं ॥ १ ॥

यथा—आर्द्रकुमार आदनसुरत्राणसुतोऽभयकुमारप्राभृतीकृतजिनप्रतिमादर्शनसमुद्भूतजातिस्मृतिदृष्टपूर्व-भवो दीक्षां गृहीतवान्, संयममाराध्य मुक्तिं प्राप ।

निर्मायार्हतबिम्बमार्हतपदस्थानाग्रिमं धार्मिकः

स्वात्मानं च परं च निर्मलयति स्तुत्यर्चनावन्दनैः ।
मन्त्रिश्रेणिकसूरिवाऽऽर्द्रकसुतं मोहान्धकारस्थितं
दीपः पुष्यति कस्य वाऽपि न मुदं श्रेयःश्रियामास्पदम् ॥ २ ॥

प्रसिद्धा कथा ॥ तथा स्वयंभूरमणसमुद्रे भव्यजीवमत्स्या जिनप्रतिमाऽऽकारमत्स्यान् दृष्ट्वा जातिस्मृतिमन्तोऽनशनमाराध्य स्वर्गे गच्छन्ति ॥ तथा शय्यंभवसूरिरपि जिनप्रतिमादर्शनात् प्रतिबुद्धः ।

सिज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धं । मणगपिअरं दसकालिअस्स निज्जूहगं वन्दे ॥ ३ ॥

प्रसिद्धा कथा ॥

॥ इति जिनबिम्बोपदेशश्चतुर्थः ॥

पित्तलसुवन्नरूप्पयरयणेहिं चन्दकंतमाईहिं । जो कारवेइ जिणवरपडिमं सो पावए मुक्खम् ॥ १ ॥

यथा--श्रीभीमसाधुना श्रीअर्बुदे स्वकारितप्रासादमूलनायकप्रतिमा ५१अङ्गुलमयी निर्मलबहुवारगालितपित्तलरसैश्चिकीर्षिता; तावता प्रह्लादनपुरीय मं० धनाकेन विज्ञप्तम्--भो भीम ! मद्भागो मध्ये दातव्यः, तेन निषि-

द्धः। ततो बिम्बभरणवेलायां झूर्णपटबाहुं सुवर्णहाटकैर्भृत्वा विलोकनमिषेणागतो रसढालनवेलायां बाहुद्वयं विस्तार्य हाटका मध्ये मुक्ताः। तेनाद्यापि द्वादशादित्यवज्झगमगायते, श्यामिका न वलति । सा संप्राति कुम्भलमेरौ पूज्यमानाऽस्ति॥ तथा सीतामहासतीपूजनार्थं वनवासे लक्ष्मणकुमारकृता च्छगणमयी श्रीसुपार्श्वप्रतिमा तच्छीलमाहात्म्याद् वज्रमयीव जाता, सा संप्रत्यपि मण्डपदुर्गे यवनादिभिः कुसुमभोगादिप्रेषणैः पूज्यमानाऽस्ति महामहिमगृहं सर्वोपसर्गहारिणी ।

॥ इति पञ्चमो जिनप्रतिमोपदेशः ॥

सन्मृत्तिकाऽमलशिलातलदारुरूप्यसौवर्णरत्नमणिचन्दनचारुबिम्बम् ।
कुर्वन्ति जैनमिह ये स्वधनानुरूपं तेऽथाऽऽमरीं च शिवसंपदमाप्नुवन्ति ॥ १ ॥

योगिनीपुरतो १लक्षाशीतिसहस्रसाहणेन सुराष्ट्रायां समागतेन सं०पेथडदेझांझणकारितकनकखोलवेष्टितविहारं दृष्ट्वा श्रीशत्रुञ्जयारूढेन जावडिप्रतिमाभङ्गः कृतः, तदा सुरत्राणमहामान्यदेसलहर० सा० समराकेण सुरत्राणफुरमाणाद् देवलोकिषु श्रीवस्तुपालप्रतिमास्थापनपरेष्वपि महता बलेन सं०१३७१वर्षे प्रति-

मोद्धारः कृतो महामहोत्सवेन। तस्मिन्नुत्सवे संघार्चायां १४ शतकनकनिघटवेष्टकाः प्रदत्ताः। तदवसरे विस्मृत्या वणिक्पुत्रैर्मल्लभट्टस्य देशान्तरीयस्य लाक्षाभृतोऽर्पितः। तदनु साधर्मिकवात्सल्ये जायमाने भट्टभोजनक्षणे उष्णशालिदालिपरिवेषणे भट्टेनोत्तार्य कराद् भूमौ मुक्तः, दृष्टः सा०समराकेण, कारणं पृष्टम्। तेनोक्तम्--तव पुण्यं गृहगमनादनु देशान्तरे त्वत्साधर्मिकाणामनुमोदनार्थं प्रकटनीयमस्ति, यदि नोत्तार्यते तदोष्णयोगाद् लाक्षा विलीयते, पश्चाद् वेष्टो रिक्तो निःश्रीको लघुर्दृश्यते। तदनु समरेण दशाङ्गुलीषु दत्ता नव्याः। तदनु भट्टेन सर्वसंघसमक्षमुक्तम्--भो भोः ! श्रीसंघलोकाः ! शृण्वन्तु शृण्वन्तु--

अधिकं रेखया मन्ये समरं सगरादपि। कलौ म्लेच्छबलाकीर्णे येन तीर्थं समुद्धृतम् ॥ २ ॥

तुष्टेन यावज्जीवार्हं दत्तम्।

॥ इति जिनबिम्बोपदेशः षष्ठः ॥

कारापय्य प्रतिमां जैनीं पूजयन्ति दिवानिशम्। ये जनास्ते द्रुतं पूज्या भवन्ति महतामपि ॥ १ ॥

पत्तनीयसा०जिनदाससुता श्रा०हांसी गन्धारवासिमाहेश्वरिकसा०केशवसुतमुकुन्देन सह पाणिग्रहणं

कारिता । सा जन्यासमं सेडीनदीतटं प्राप्ता, जन्या भोजनार्थं तत्र स्थिता, सा जिनपूजां विना न भुङ्क्ते । तदा देवरैर्हास्येन वेलूछगणमिश्रा प्रतिमा कृता पत्रैः पूजिता । हांस्या उक्तम्–जिनं पूजय । तया नमस्कारस्थापनापूर्वं पूजिता, तदनु भोजनं कृतम् । तच्छीलमाहात्म्येन वेलाविशेषेण च नद्यधिष्ठायकेनाधिष्ठिता वज्रमयी जाता । जन्याचलनावसरे शकटानि स्तम्भितानि प्रतिमाधिष्ठायकेन । आकाशे वाणी जाता–यदि श्रावकीभूय नदीतटे एनां आदिनाथप्रतिमां प्रासादे स्थापयिष्यथ, तदा शकटानि चलिष्यन्ति, नान्यथा । तैस्तथा प्रतिपन्नम् , तत्र प्रासादः कारितो वीणाग्रामे सेडीनदीतटस्थे गन्धारवेलाकूले । तदनु सुखेन प्राप्ताः, परमार्हताः सर्वेऽपि जाताः । तत्तीर्थं महज्जातम् । सर्वदाऽपि वृद्धैका स्त्री शुचीभूय तद्ग्रामनिवासिनी जिनं पूजयित्वा द्रव्यं मार्गयति, तदा स्वप्नेऽधिष्ठायकेनोक्तम्–प्रतिमाहस्तस्थः प्रतिदिनं त्वया द्रम्मो ग्राह्यः । प्रभाते तथा करोति स्म । लक्ष्मीवती जाता । प्रातिवेश्मिकया लक्ष्म्याः कारणं पृष्टम् । मुग्धत्वेन तयोक्तम् । द्वितीये दिने तत्प्रथमं प्रातिवेश्मिकी प्रभाते समागता यावद् द्रम्मं गृह्णाति, तावद् द्रम्मो हस्ते विलग्नः । रुष्टेनाऽधिष्ठायकेन पूजाकारिण्या अपि नाऽर्पितः । अद्यापि स द्रम्मः प्रतिमाहस्ते दृश्यते । नीरेण प्रदीपा ज्वलन्ति, प्रक्षालननीरं गच्छद् न दृश्यते । एवमपरैरपि प्रतिमा कार्या ॥

॥ इति जिनप्रतिमोपदेशः समाप्तः ॥

## अथ पुस्तकलेखनोपदेशः ।

ये लेखयन्ति जिनशासनपुस्तकानि व्याख्यानयन्ति च पठन्ति च पाठयन्ति ।
शृण्वन्ति रक्षणविधौ च समाद्रियन्ते ते देवमर्त्यशिवशर्म नरा लभन्ते ॥ १ ॥
लेखयित्वा सदा शास्त्रं श्रोतव्यं च विचक्षणैः । निरन्तरसुखप्राप्त्यै प्रारम्भादासमर्थनम् ॥ २ ॥

श्रीकल्पादिशास्त्राणि लेखयित्वा श्रोतव्यानि । यतः—

सज्ज्ञानाम्बुप्रपा धर्मसत्रं पुस्तकवाचना । येन कार्येत तेनाप्तमैहिकामुष्मिकं सुखम् ॥ ३ ॥
एषा शुभा पुस्तकदानशाला नानाविधार्थावलिभोज्यमाला ।
पूर्वर्षिनामाऽमृतपूरपूर्णा सदा सतां स्यात् सुखसेवनीया ॥ ४ ॥

शास्त्रश्रवणेन यत्फलं भवति तच्छ्रूयताम्—

धर्मे यत्नः शुभा बुद्धिः सारासारत्वनिर्णयः । हेयोपादेयविज्ञानं संवेगोपशमौ श्रुते ॥ ५ ॥ इति ।
श्रीधर्मघोषसूरिप्रदत्तोपदेशवासितचेतसा सं०पेथडदेवेन एकादशाङ्गी श्रीधर्मघोषसूरिमुखात् श्रोतु-

मारब्धा । तत्र पञ्चमाङ्गमध्ये यत्र यत्र 'गोयमा' इत्यायाति, तत्र तत्र तन्नामरामणीयकप्रमुदितः सौवर्णटङ्कैः पुस्तकं पूजयति--

या षट्त्रिंशत्सहस्रान् प्रतिविधिसुजुषां बिभ्रती प्रश्नवाचां चत्वारिंशच्छतेषु प्रथयति परितः श्रेणिमुद्देशकानाम् ।
रङ्गद्भङ्गोत्तरङ्गान् नयगमगहना दुर्विगाहा विवाह--प्रज्ञप्तिः पञ्चमाङ्गं जयति भगवती सा विचित्रार्थकोशः ॥ ६ ॥

प्रतिप्रश्नमुक्तहाटक३६सहस्रादिबहुद्रव्यव्ययेन समग्रागमादिसर्वशास्त्रासंख्यपुस्तकलेखनतत्पट्टकूल-वेष्टनकपट्टसूत्रोत्तरिकाकाञ्चनवातिकाचारवः सप्त सरस्वतीभाण्डागारा भृगुकच्छसुरगिरिमण्डपदुर्गार्बुदाचलादि-स्थानेषु बिभराम्बभूविरे । तथा श्रीकुमारपालेन सप्तशतलेखकपार्श्वात् ६लक्ष३६सहस्रागमस्य सप्त प्रतयः सौवर्णाक्षराः, श्रीहेमाचार्यप्रणीतव्याकरणचरित्रादिग्रन्थानामेकविंशतिः प्रतयो लेखिताः। किं बहुना ? शिवपुरपथ-प्रकाशनदीपसमानस्य हि ज्ञानस्य दानमपरदानाधिकगुणं गृणन्ति गुणिनः ।

यदुक्तम्——

विषयजसुखमिच्छोर्गेहिनः काऽस्ति शीलं ? करणवशगतस्य स्यात्तपो वाऽपि कीदृग् ? ।
अनवरतमदभ्रारम्भिणो भावना किं ? तदिह नियतमेकं दानमेवास्य धर्मः ॥ ७ ॥

ज्ञानाऽभयोपग्रहदानभेदात् तच्च त्रिधा सर्वविदो वदन्ति ।
तत्रापि निर्वाणपथप्रदीपज्ञानस्य दानं प्रवरं वदन्ति ॥ ८ ॥
कालानुभावाद् मतिमान्द्यतश्च तच्चाधुना पुस्तकमन्तरेण ।
न स्यादतः पुस्तकलेखनं हि श्राद्धस्य युक्तं नितरां विधातुम् ॥ ९ ॥

इत्यादि ज्ञात्वा पुस्तकलेखनं कार्यम् ॥

॥ इति पुस्तकलेखनोपदेशः प्रथमः ॥



लेखयन्ति नरा धन्या ये जैनागमपुस्तकान् । ते सर्ववाङ्मयं ज्ञात्वा सिद्धिं यान्ति न संशयः ॥ १ ॥
तथा श्रीजिनागमलेखकानां विरूपमपि न स्यात् संसारे वसतां सताम् । यतः—

न ते नरा दुर्गतिमाप्नुवन्ति न मूकतां नैव जडस्वभावम् ।
नैवाऽन्धतां बुद्धिविहीनतां च ये लेखयन्त्यागमपुस्तकानि ॥ २ ॥

पुस्तकलेखनं हि सकलपुण्यकरणीयदर्शकत्वेन धर्मसत्रागारमिव विभाति । यथा पर्युषणापर्वणि कल्प-

चरित्रपुस्तकवाचनातः श्राद्धा दानदेवपूजाशीलतपोभावनाप्रभावनादि पुण्यं कुर्वन्ति, तथा पुस्तकैर्विना पाण्डित्यमपि नायाति गुरूणां नव्यशिष्याणां च । यदुक्तम्—

आरोग्यबुद्धिविनयोद्यमशास्त्ररागाः पञ्चाऽऽन्तराः पठनसिद्धिकरा नराणाम् ।
आचार्यपुस्तकसहायनिवासवल्भा बाह्याश्च पञ्च पठनं परिवर्धयन्ति ॥ ३ ॥

इत्याद्युपदेशतः श्रीवस्तुपालमन्त्रिणा सौवर्णमषीमयाक्षरा एका सिद्धान्तप्रतिर्लेखिता । अपरास्तु श्रीताडकागदपत्रेषु मषीवर्णाञ्चिताः ६प्रतयः । एवं सप्तकोटिद्रव्यव्ययेन सप्त सरस्वतीकोशा लेखिताः । तदनु श्री-उदयप्रभसूरिभिराशीर्वादः प्रदत्तः । तद्यथा—

जम्बूद्वीपो जलधिपरिखाभूषितो यावदास्ते ज्योतिश्चक्रं सुरगिरितटीं पर्यटत्येव यावत् ।
यावत्कूर्मो वहति वसुधां त्वद्यशःपुञ्जसार्धं जीयाज्जैनं मुखमिव परं पुस्तकं वस्तुपाल ! ॥ ४ ॥

एवमपरैः पुण्यवद्भिः पुस्तकलेखनवाचनादितद्रक्षणोपकरणमीलने परबलादिभयवृष्ट्यादिविनाशे जायमाने तत्तन्निर्भयस्थानकुट्टिमबद्धावासे मूषकाग्निकीटकस्पन्दादिदोषरहिते सुयत्नस्थापनविषये चिन्तनीयम् ॥

॥ इति पुस्तकलेखनोपदेशो द्वितीयः ॥

नाणं नियमग्गहणं नवकारो नयरुई अ निट्ठा य । पञ्चनयाविभूसिआणं न दुल्लहा सुगई लोए ॥ १ ॥

यद्यपि——

नारीनदीनरेन्द्राणां नागनीचनियोगिनाम् । नखिनां च न विश्वासः कर्तव्यः श्रियमिच्छता ॥ २ ॥

सर्वथा नकारकरणं सतां न युक्तम्, तथापि ज्ञाननियमनमस्कारजापनयमार्गनिष्ठादिनकारालङ्कृतमानसानां सुगतिर्न दुर्लभा । तत्र ज्ञानं सुगतिकारकम् । यतः——

तैरात्मा सुपवित्रितो निजकुलं तैर्निर्मलं निर्मितं तैः संसारमहान्धकूपपततां हस्तावलम्बो ददे ।
दत्तं तैरिह सर्वसौख्यजननं सज्ज्ञानदानं नृणां श्रीसर्वज्ञचरित्रपुस्तकमहो ! ये लेखयन्त्यादरात् ॥ ३ ॥

ये तीर्थनाथाऽऽगमपुस्तकानि न्यायार्जितार्थैरिह लेखयन्ति ।
ते तत्त्वतो मुक्तिपुरीनिवासस्वीकारपत्रं किल लेखयन्ति ॥ ४ ॥

ज्ञानिनो हिंसादिवर्जनेन सुगतिः स्यात् । यतः——

न शुकः क्वापि मांसाशी चत्वरे रामपाठतः । यस्याऽभ्यासः श्रुतांशेऽपि तस्य हिंसामतिः कुतः ? ॥ ५ ॥

तथाः——उवसमविवेगसंवरपयचिन्तवणवज्जदलियपावगिरी । सोढुवसग्गो पत्तो चिलाइपुत्तो सहस्सारे ॥६॥

चिलातीपुत्रकथा प्रसिद्धा ॥ तथा—

अणमिसिनयणा मणकज्जसाहणा पुप्फदामअमिलाणा । चउरंगुलेण भूमिं न च्छिबिंति सुरा जिणा बिंति॥७॥

चौरोऽपि रौहणेयः श्रीमहावीरमुखाम्बुजात् । गाथामेकां पुरा श्रुत्वा स्वीयमर्थमसाधयत् ॥ ८ ॥

रौहणेयकथा ॥ तथा—

क्षेत्रपालेन बालेन कृता कुम्भकृताऽपि च । गाथा गुणाय संजाता यवराजऋषेस्तथा ॥ ९ ॥

उहावसी पहावसी ममं चेव निरक्खसी । लक्खिओ ते अभिप्पाओ जवं पुच्छसि गद्दहा ॥ १० ॥

अओ गया तओ गया जोइज्जन्ती न दीसई । अम्हे न दिट्ठा तुह्मे न दिट्ठा अगडे छूढा अणुल्लिआ ॥११॥

सुकुमालयकोमलभद्दलया तुम्हे रत्तिं हिंडण सीलणया । अम्ह पासाओ न ते भयं दीहपिट्ठीओ ते भयं॥१२॥

यवराजर्षिकथा ॥ तथा—

सुट्ठु गाईयं सुट्ठु वाइयं सुट्ठु नच्चियं सामसुन्दरि ! । अणुपालिय दीहराईयं ओसमिणंते मा पमायाए॥१३॥

कुमरं सत्थाहिवयं मन्ति मिण्ठं च जो अपव्वावे । संबुद्धो गीइए तं वन्दे खुड्डगकुमारम् ॥ १४ ॥

क्षुल्लककुमारकथा ॥

चक्किदुगं हरिपणगं पणगं चक्कीण केसवो चक्की । चक्की केसवचक्की दु चक्कि केसे अ चक्कीअ ॥१५॥

याकिनीमहत्तरोक्तगाथार्थमजानन् सत्यप्रतिज्ञः याकिनीसुतत्वमङ्गीकृत्य दीक्षां गृहीत्वा श्रीहरिभद्रसूरिः प्रभावकः १४४४ प्रकरणकारकः समजनि । श्रीहरिभद्रसूरिप्रबन्धः प्रसिद्धः ॥ तथा—

मान्धाता स महीपतिः कृतयुगाऽलङ्कारभूतो गतः सेतुर्येन महोदधौ विरचितः क्वाऽसौ दशास्याऽन्तकः ?।
अन्ये चापि युधिष्ठिरप्रभृतयो यावद्भवान् भूपते !, नैकेनापि समं गता वसुमती मन्ये त्वया यास्यति ॥१६॥

श्रीभोजकृतैतत्काव्यप्रेषणात् प्रतिबुद्धेन मुञ्जेन भोजो न हतः । मुञ्जभोजप्रबन्धः प्रसिद्धः ॥ सिद्धसेनदिवाकरोऽपि वृद्धवादिविनेयः समभूत्

नवि मारीइ नवि चोरीइ परदार गमण निवारीइ । थोवा थोवं दाईइ टगि टगि सरगि सुखि जाईइ ॥१७॥

इत्यादिपञ्चशतदुग्धघटश्रवणात् स्वस्य गोपालसभानुपलक्षणेन मौढ्यं मन्यमानः । वृद्धवादिसिद्धसेनादीनां ज्ञानाराधने दृष्टान्ताः स्पष्टाः स्वयं वाच्याः ॥ किं बहुना ?—

यदि गाथापदं चैकं गुणाय महते भवेत् । धन्यास्त एव ये ज्ञानं सम्यगाराधयन्त्यहो ! ॥ १८ ॥
यानपात्रसमं ज्ञानं ब्रुडतां भववारिधौ । मोहान्धकारसंहारे ज्ञानं मार्तण्डमण्डलम् ॥ १९ ॥

तृतीयं लोचनं ज्ञानं द्वितीयो हि दिवाकरः । अचौर्यहरणं वित्तं विना स्वर्णं विभूषणम् ॥ २० ॥
लेखनीयमतो जैनं शास्त्रं वाच्यं सुबुद्धिभिः । श्रोतव्यमुत्तमैर्ज्ञानं तृतीयं नेत्रमिच्छुभिः ॥ २१ ॥

अथ नियमग्रहणं महालाभाय भवति परलोके इह लोकेऽपि च । यथा--वङ्कचूलस्याज्ञातफल--राजपत्नी--काकमांस--द्यष्टक्रमपश्चाद्वलनघातमोचनाद्या नियमा जीवितरक्षाकरा बभूवुः । वङ्कचूलकथा प्रसिद्धा ॥

तथा——

मर्तव्यं न निजेच्छया न वितथं वर्षे द्विपक्षीं विना वक्ष्ये चाऽक्षतनालिकेरिवदनक्षेपो न कार्यो मया ।
पक्वान्नेषु कवेल्लुकानि मिहिरस्तुह्यादिदुग्धानि च क्षीरेषु च्छगणं गणीन्द्र ! हरितेष्वाहारणीयं न मे ॥२२॥

इत्याद्युल्लुण्ठनियमग्रहणपरायणः श्रे०विमलसुतः कमलो द्वित्रिवारसुगुरूपदेशयोगेऽप्युल्लुण्ठत्वेन मद्गृहद्वाराऽऽसन्नगृहकुम्भकारटालिनिभालनं विना न भोक्ष्येऽहमित्यभिग्रहं जग्राह । कियता कालेन कटाहिलाभादिना महालाभकृत् समजनि, परमार्हतो बभूव ॥

॥ अथ नमस्कारस्मरणा ॥

विमुच्य निद्रां चरमे त्रियामायामार्धभागे शुचिमानसेन ।

दुष्कर्मरक्षोदमनैकदक्षो ध्येयस्त्रिधा श्रीपरमेष्ठिमन्त्रः ॥ १ ॥

किमत्र मन्त्रौषधिमूलिकाभिः किं गारुडस्वर्गमणीन्द्रजालैः ? ।
स्फुरन्ति चित्ते यदि मन्त्रराजपदानि कल्याणपदप्रदानि ॥ २ ॥

श्रीमन्नमस्कारपदानि सर्वसिद्धान्तसाराणि नवाऽपि नूनम् ।
आद्यानि पञ्चाऽतिमहान्ति तेषु मुख्यं महाध्येयमिहामनन्ति ॥ ३ ॥

पञ्चादौ यत्पदानि त्रिभुवनपतिभिर्व्याहृता पञ्चतीर्थी तीर्थान्येवाष्टषष्टिर्जिनसमयरहस्यानि यस्याऽक्षराणि ।
यस्याष्टौ संपदश्चानुपमतममहासिद्धयोऽद्वैतशक्तिर्जीयाल्लोकद्वयस्याऽभिलषितफलदः श्रीनमस्कारमन्त्रः ॥ ४ ॥

पञ्चतायाः क्षणे पञ्च रत्नानि परमेष्ठिनाम् । आस्ये दधाति यस्तस्य सद्गतिः स्याद् भवान्तरे ॥ ५ ॥

भोअणसमए सयणे विबोहणे पवेसणे भए वसणे । पंचनमुक्कारं खलु समरिज्जा सव्वकालंपि ॥ ६ ॥

धर्मोपदेशमालायाम् ।

वंतर बीजओरा तणो बीजो रावसि किद्ध । मन्तराउ महिमानिलो सो समरउ मणि सिद्ध ॥ ७ ॥

याताः प्रयान्ति यास्यन्ति पारं संसारवारिधेः । परमेष्ठिनमस्कारं स्मारं स्मारं घना जनाः ॥ ८ ॥

स्वस्यैकच्छत्रतां विश्वे पापानि विमृशन्तु मा । अघमर्षणमन्त्रेऽस्मिन् सति श्रीजिनशासने ॥ ९ ॥

सिंहेनेव मदान्धगन्धकरिणो मित्रांशुनेव क्षपाध्वान्तौघो विधुनेव तापततयः कल्पद्रुणेवाऽऽधयः ।
तार्क्ष्येणेव फणाभृतो घनकदम्बेनेव दावाग्नयः सत्त्वानां परमेष्ठिमन्त्रमहसा वल्गन्ति नोपद्रवाः ॥१०॥

संग्रामसागरकरीन्द्रभुजङ्गसिंहदुर्व्याधिवह्निरिपुबन्धनसंभवानि ।
चौरग्रहभ्रमनिशाचरशाकिनीनां नश्यन्ति पञ्चपरमेष्ठिपदैर्भयानि ॥ ११ ॥

ध्यातोऽपि पापशमनः परमेष्ठिमन्त्रः किं स्यात्तपःप्रबलितो विधिनाऽर्चितश्च ? ।
दुग्धं स्वयं हि मधुरं कथितं तु युक्त्या संमिश्रितं च सितया वसुधासुधेव ॥ १२ ॥

आकृष्टिं सुरसंपदां विदधती मुक्तिश्रियो वश्यतामुच्चाटं विपदां चतुर्गतिभुवां विद्वेषमात्मैनसाम् ।
स्तम्भं दुर्गमनं प्रति प्रयततां मोहस्य संमोहनं पायात् पञ्चनमस्क्रियाऽक्षरमयी साऽऽराधनादेवता ॥१३॥

यो लक्षं जिनबद्धलक्ष्यसुमनाः सुव्यक्तवर्णक्रमं श्रद्धावान् विजितेन्द्रियो भवहरं मन्त्रं जपेच्छ्रावकः ।
पुष्पैः श्वेतसुगन्धिभिश्च विधिना लक्षप्रमाणैर्जिनं यः संपूजयते स विश्वमहितः श्रीतीर्थराजो भवेत् ॥ १४ ॥

स्वस्थाने पूर्णमुच्चारं मार्गे चाऽर्धं समाचरेत् । पादमाकस्मिकातङ्के स्मृतिमात्रं मरणान्तिके ॥ १५ ॥

मन्ताण मन्तो परमो इ मुत्ति धेयाण धेयं परमं इ मुत्ति ।
तत्ताण तत्तं परमं पवित्तं संसारिसत्ताण दुहाहयाणं ॥ १६ ॥

ताणं अन्नं तु नो अत्थि जीवाण भवसायरे । बुड्डन्ताणं इममुत्तं नवकारं सुपोयणं ॥ १७ ॥

अणेगजम्मन्तरसंचिआणं दुहाण सारीरियमाणसाणं ।
कत्तो अ भव्वाण हविज्ज नासो न जाव पत्तो नवकारमन्तो ?॥ १८ ॥

हरइ दुहं कुणइ सुहं जणइ जसं सोसए भवसमुद्दं । इहलोए परलोए सुहाण मूलं च नवकारो ॥ १९ ॥

आसतां मनुजा दूरे तिरश्चामपि निश्चितम् । मन्त्रोऽसौ सद्गतिं दत्ते प्रान्तकाले स्मृतोऽपि हि ॥ २० ॥

जिणसासणस्स सारो चउदसपुव्वाण जो समुद्धारो । जस्स मणे नवकारो संसारो तस्स किं कुणइ ?॥ २१ ॥

एसो मङ्गलनिलओ भवविलओ सयलसंतिजणओ अ ।
नवकारपरममन्तो चिन्तिअमित्तो सुहं देइ ॥ २२ ॥

नवकारइक्कअक्खर पावं फेडेइ सत्तअयराणं । पन्नासं च पएणं सागरपणसयसमग्गेण ॥ २३ ॥

किं बहुना ?,

पञ्चनमुक्कारसमं अन्ते वच्चन्ति जस्स दस पाणा ।
सो जइ न जाइ मुक्खं अवस्स वेमाणिओ होइ ॥ २४ ॥

अत्र दृष्टान्ताः षडावश्यकमध्यगता राजसिंहरत्नवतीशिवादीनां ज्ञेयाः ॥ कलावपि श्रीनमस्कार-मन्त्रमहिमा दृश्यते । यथा--धावडग्रामे हुंबश्रे०भीमाको वसति। तस्यैकदा मन्त्रविद् योगी लाखणसी मिलितस्तेन स्वावासे आकारितः; परमान्नेन पात्रं पूरितम् । सन्तुष्टेन योगिनोक्तम्--यत्किमपि तव कार्यं स्यात् तद् ममाग्रे कथय, यथाऽहं मन्त्रशक्त्या साधयामि । ततस्तेनोक्तम्--ममाष्टापदशैलदेववन्दनमनोरथोऽस्ति । ततो योगिना प्रभाते पट्टकश्चन्दनादिभिः पूजितः, स्वामोघमन्त्रेणाभिमन्त्रितः; श्रेष्ठी तदुपरि उपवेशितः; अखण्डाक्षतैर्मन्त्रपूतैराच्छोटितः पट्टको आकाश उत्पतितः । मध्याह्ने श्रीअष्टापदाद्रिसमीपे गतः, तदा श्रेष्ठी अतितीव्रतरसूर्यकिरणैः संतापितोऽत्यन्ताकुलो जातः, पट्टकस्तु कथमपि पश्चाद् नाऽऽयाति बहुभारदानेऽपि, ततः श्रेष्ठिना स्वमरणभीतेन नमस्कारः स्मृतः, तत्प्रभावेन पट्टकः सहसा ध्यानमौनपरायणस्य योगिनोऽग्रे पतितः । पश्चाच्चकितो योगी मया किमपि कूटं जपितम्। पृष्टं श्रेष्ठिपार्श्वे--त्वयाऽपि किमपि स्मृतम् ? । तेनोक्तम्-श्रीपरमेष्ठिमन्त्रः। तन्महिमानं स्वामोघमन्त्रादधिकं ज्ञात्वा पादे पतित्वा योगिना श्रीनमस्कारमन्त्रः शिक्षितः ।

योगिनः सर्वसिद्धिकरः समजनि । एवमपरेऽपि चण्डपिङ्गलहुण्डिकयक्षश्रीमतीस्वर्णपुरुषसिद्धाः नमस्कारस्मरणे दृष्टान्ता ज्ञेयाः ॥ अथ न्यायरुचिः—न्यायमार्गसेवातः इहलोके यशःकीर्त्तिमहत्त्वप्रतिष्ठादयः, सद्गत्यादिकं च परत्र ।

यतः—यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ १ ॥

धर्मिणि नृपे रामराज्यमुच्यते ॥ अथ निष्ठा—पञ्चेन्द्रियनिग्रहः प्रतिक्रमणसामायिकपोषधग्रहणाद्यनुष्ठानं दुष्करश्राद्धप्रतिमादिप्रतिपालनं महालाभाय भवति । यतः—

तिरिआकुसमकसारा निवा य वहबन्धमारणसयाइं । नवि इहयं पावंता परत्थ जइ नियमिआ हुंता ॥ २ ॥

इन्द्रियाणि मुत्कलान्यनर्थप्रदानि । यतः—

कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च । एकः प्रमादी स कथं न हन्याद् यः सेवते पञ्चभिरेव पञ्च ?॥३॥

चक्षुर्दग्धं परस्त्रीभिर्हस्तौ दग्धौ प्रतिग्रहैः । जिह्वा दग्धा परान्नेन गतं जन्म निरर्थकम् ॥ ४ ॥

इत्यादिवैराग्यवासनावान् शुभगतिं लभते । प्रदेशीनृपादिदृष्टान्ता वाच्याः ॥

॥ इति पुस्तकलेखनोपदेशः ॥

अथ चतुर्विधश्रीश्रमणसङ्घभक्तिपूजनोपदेशास्तद्यथा—

रत्नेषु चिन्तामणिरत्र यद्वत्सारस्तरूणामिव कल्पवृक्षः । देवेषु सर्वेष्वपि वीतरागस्तद्वत्सुपात्रेषु सुसाधुसङ्घः ॥१॥
नादिनिश्शेषगुणौघरत्नरत्नाकरे बिन्दुरिवाऽम्भसोऽन्तः। सङ्घे नियुक्तो निजवित्तलेशः स्यादक्षयः क्षीणपरिक्षयेऽत्र॥२॥

श्रीसङ्घस्य रत्नाकरस्योपमा युक्ता । यतः—

पंचपरमिट्ठिरयणाइं बहुमुल्लाइं जस्स मज्झम्मि । उप्पज्जंति सया वि हु स संघरयणायरो जयउ ॥ ३ ॥

श्रीसङ्घः पञ्चविंशस्तीर्थङ्करः सर्वतीर्थङ्करनमस्करणीयः । यतः—

उर्वी गुर्वी तदनु जलदः सागरः कुम्भजन्मा व्योमाथातो रविहिमकरौ तौ च यस्यांह्रिपीठे ।
स प्रौढश्रीर्जिनपरिवृढः सोऽपि यस्य प्रणन्ता स श्रीसङ्घस्त्रिभुवनगुरुः कस्य न स्याद् नमस्यः ? ॥ ४ ॥

प्राग् मेरुर्भूस्ततोऽब्दोऽब्धिरगस्त्यः खं ग्रहा जिनः। प्रौढा एकैकतः सर्वप्रौढः सङ्घस्तदर्चितः ॥ ५ ॥

लोकेभ्यो नृपतिस्ततोऽपि हि वरश्चक्री ततो वासवः सर्वेभ्योऽपि जिनेश्वरः समधिको विश्वत्रयीनायकः ।
सोऽपि ज्ञानमहोदधिः प्रतिदिनं सङ्घं नमस्यत्यहो ! वज्रस्वामिवदुन्नतिं नयति तं यः स प्रशस्यः क्षितौ ॥६॥

अत एव श्रीवज्रस्वामिना बाल्येऽपि श्रीसङ्घो बहु मानितः, श्रीसूरिपदादनु १२ वर्षदुष्काले स्वशक्त्या

सुभिक्षस्थानानयनेन पूजितः । सङ्घभक्तौ श्रीवज्रस्वामिप्रबन्धः संपूर्णो वाच्यः ॥

॥ इति श्रीसङ्घभक्त्युपदेशः प्रथमः ॥

---

पुत्रजन्मविवाहादिमङ्गलानि गृहे गृहे । परं भाग्यवतां पुंसां श्रीसङ्घार्चादिमङ्गलम् ॥ १ ॥

इह जगति पुत्रजन्ममहोत्सवविवाहमहोत्सवलेखशालामहोत्सवादिसांसारिकमङ्गलानि नरेश्वरप्रभृत्युत्तमलोककौलिकनापितादिपामरनरादिमध्यमलोकजनङ्गमादिहीनानामपि गेहेषु स्वस्वसंपत्त्यनुसारतः परमोत्साहतो भवन्ति, परं चतुर्विधश्रीसङ्घसत्कारपूजादिमङ्गलानि धन्यानां पुण्यवतामेव गेहेषु भवन्ति ।

यतः—रुचिरकनकधाराः प्राङ्गणे तस्य पेतुः प्रवरमणिनिधानं तद्गृहान्तः प्रविष्टम् ।
अमरतरुलतानामुद्गमस्तस्य गेहे भवनमिह सहर्षं यस्य पस्पर्श सङ्घः ॥ २ ॥

अत एव श्रीवस्तुपालमन्त्रिणा प्रतिवर्षं वारत्रयं चतुर्विधः श्रीसङ्घः सर्वशक्त्या पूजितः । तद्यथा—

एकं वासः सुरेशैः कृतसुकृतशतैर्जन्मकाले जिनानां दत्तं दीक्षाक्षणे वा ध्वजवसनमथो एकमेवाम्बरं च ।
सूर्यादीनां ग्रहाणां पुनरपि विधिना दत्तमस्मिन् क्षणेऽसौ श्रीसङ्घे भूरि यच्छन्नधरितसुरपो नन्दताद् मन्त्रिराजः॥३॥

मसृणघुसृणपङ्कैर्भालपट्टेषु लिप्त्वा विधिलिखितकुवर्णश्रेणिकाजातकस्य ।
विरचयति सुवर्णश्रेणिभूषाममीषां ध्रुवमिति नववेधा वस्तुपालः सुमेधाः ॥ ४ ॥
षट्त्रिंशता हेममयैः सहस्रैः रत्नोज्ज्वलैः श्रावकपुङ्गवानाम् ।
भालस्थले भूषयति स्म भक्त्या श्रीवस्तुपालस्तिलकैर्विवेकी ॥ ५ ॥

तदुत्सवे संजाते श्रीवस्तुपालोक्तिः--

कदा किल भविष्यन्ति मद्गृहाङ्गणभूमयः । श्रीसङ्घचरणाम्भोजरजोराजीपवित्रिताः ॥ ६ ॥

इत्यादिप्रकारैः श्रीसङ्घश्चतुर्विधः पूजनीयः प्रतिवर्षं प्रमोदप्रकर्षेण विभवानुसारेण भाग्यवता ॥

॥ इति सङ्घपूजोपदेशो द्वितीयः ॥

---

अर्हतामपि मान्योऽयं पूज्यः पुण्यवतामपि । सेव्यः सुरासुरेशानां सङ्घः पूज्यस्ततो बुधैः ॥ १ ॥

त्रैलोक्यपूज्यचरणकमलः श्रीसङ्घश्चतुरेण पूज्यः प्रमोदतः । यतः—

सङ्घः सद्गुणसङ्घसंहतिकरः सङ्घो जिनैर्वन्दितः सङ्घः शासनवृद्धिहेतुरसकृत् सङ्घः सतां मुक्तिदः ।

तद्भक्त्या विहितं भुजार्जितधनैः सङ्घस्य यैः पूजनं किं तैर्नाम न पूजितं सुकृतिभिः किं वा न लब्धं फलम् ?॥२॥

श्रीसङ्घपूजा चतुर्विधा वस्त्रपात्रालङ्कारताम्बूलादिभेदतः । तत्र वस्त्रपूजा यथा--

न्यायोपात्तैः सितैर्वस्त्रैः सङ्घमभ्यर्चयन्ति ये । तद्देहपञ्जरे लक्ष्मीः कुरुते सारिकाव्रतम् ॥ ३ ॥

यज्जन्मैव गुणास्पदं जगति यच्छृङ्गार आद्यो नृणां शीतोष्णाद्युपद्रवं हरति यन्निर्लज्जभावापहम् ।
प्रासादध्वजकैतवादिव सुरैरारोप्यते मूर्ध्नि यत् तद्देयं गुरवे विशुद्धवसनं धन्यैः सुपुण्यात्मने ॥ ४ ॥

पात्रपूजा यथा--पतद्ग्रहादिकं पात्रं देयं योग्यं सुसाधवे । संसारसागरोत्तारहेतवे धातुवर्जितम् ॥ ५ ॥

आभरणपूजा यथा--

पट्टकूलादिवासांसि स्वर्णादितिलकानि च । साधर्मिकाणां सम्यक्त्वशुद्ध्यै देयानि भावतः ॥ ६ ॥

यतः--

साहम्मिअम्मि पत्ते घरंगणे जस्स होइ न हु नेहो । जिणसासणभणिअमिणं सम्मत्ते तस्स संदेहो ॥ ७ ॥

ताम्बूलप्रदानपूजा यथा--

रूप्यस्वर्णादिकैष्टङ्कैः क्रमुकैर्लाङ्गलीफलैः । नागवल्लीदलैर्देयं ताम्बूलं श्रावकैः सदा ॥ ८ ॥

इत्यादिप्रकारैर्विवेकिभिः श्रीसङ्घः पूजनीयः ।

। इति सङ्घपूजोपदेशस्तृतीयः ।

यः संसारनिरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते यं तीर्थं कथयन्ति पावनतया येनास्ति नान्यः समः ।
यस्मै तीर्थपतिर्नमस्यति सतां यस्माच्छुभं जायते स्फूर्तिर्यस्य परा वसन्ति च गुणा यस्मिन् स सङ्घोऽर्च्यताम्॥१॥

यः श्रीसङ्घः आचार्योपाध्यायसाधुसाध्वीश्राद्धश्राविकारूपः क्रियाज्ञानदर्शनदानशीलतपःकरणादिपुण्यै-र्मुक्त्यर्थमुद्यमं करोति; यं श्रीसङ्घं परमतीर्थं कथयन्ति महर्षयः । यतस्तीर्थं प्रथमगणधरश्चतुर्विधः श्रीसङ्घो वा, तथा येन श्रीसङ्घेन समो नान्यः कश्चित् आर्यदेशेषूत्पत्तिसद्भावाद् दुर्लभत्वेन ।

यतः--सद् द्रव्यं सत्कुले जन्म सिद्धक्षेत्रं समाधयः । सङ्घश्चतुर्विधो लोके सकाराः पञ्च दुर्लभाः ॥२॥

तथा तीर्थकरोऽपि यस्मै नमस्कारं करोति धर्मदेशनाप्रारम्भे, 'नमो तित्थस्स' इत्युक्त्वा ।

यतः--तित्थपणामं काउं कहेइ साहारणेण सद्देण । सव्वेसिं सन्नीणं जोअणनीहारिणा भयवं ॥ ३ ॥

यस्मान्माङ्गलिकानि प्रासादप्रतिमातीर्थयात्रापदप्रतिष्ठासङ्घवात्सल्यसत्रागाराऽमार्युद्घोषणादीनि सं-

भवन्ति । यस्य श्रीसङ्घस्य प्रकृष्टा स्फूर्त्तिर्महिमा गुरुताऽनन्यसाधारणी नरेश्वरा अपि कथितकारिणो भवन्ति, यस्य रेखां न लुम्पन्ति, ये तु श्रीसङ्घप्रत्यनीकास्ते तु गर्दभिल्लनृपनमुचिविप्रवदुच्छेदं प्राप्नुवन्ति; यस्मिन् दानशीलसत्यादयो गुणा वसन्ति, एवंविधः श्रीसङ्घः, अशनपानखादिमस्वादिमाद्याहारनानाविधवस्त्रपात्रादिसत्कारैः श्रीवस्तुपालवत्पूजनीयः । यतः—

चौलुक्यः परमार्हतो नृपशतस्वामी जिनेन्द्राज्ञया निर्ग्रन्थाय जनाय दानमसमं न प्राप जानन्नपि ।
स प्राप्तस्त्रिदिवं स्वचारुचरितैः सत्पात्रदानेच्छया त्वद्रूपोऽवततार गूर्जरभुवि श्रीवस्तुपाल ! भुवम् ॥ ४ ॥

इति श्रीसङ्घपूजोपदेशश्चतुर्थः ।

---

रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव ।
पाथोधिः पयसामिवेन्दुमहसां स्थानं गुणानामसावित्यालोच्य विरच्यतां भगवतः सङ्घस्य पूजाविधिः ॥ १ ॥

इव यथा रोहणाचलः नीलमहानीलमरकतकर्केतकपद्मरागवैडूर्यसूर्यकान्तजलकान्तश्रीकान्तवीतशोकापराजितगङ्गोदकमसारगल्लहंसगर्भलोहिताक्षकौस्तुभचिन्तामणिप्रमुखाणां स्थानम्, इव यथाऽऽकाशं सूर्य-

सोममङ्गलबुधबृहस्पतिशुक्रशनैश्चरादि ८८ ग्रहाश्विनीभरणीप्रमुख२८नक्षत्रादितारककोटाकोटीनां स्थानम् ।

यतः--

गह अट्ठासी नक्खत्त अडवीसं तार कोडिकोडीणं । छासट्ठिसहस नवसय पणहुत्तरि एगससिसिन्नम् ॥२॥

यथा कल्पवृक्षाणां पारिजातमन्दारहरिचन्दनादीनां स्वर्गः स्थानकं, यथा सरोवरं शतपत्रसहस्रपत्र-लक्षपत्रनीलोत्पलकुवलयपुण्डरीकादिककमलानां स्थानकं, यथा समुद्रो नीराणाम् ।

यथा--नगररहचक्कपउमे चंदे सूरे समुद्दमेरुम्मि । जो उवमिज्जइ सययं तं संवगुणायरं वंदे ॥ ३ ॥

तथा श्रीसङ्घः गुणानां विनयविवेकगाम्भीर्यधैर्यचातुर्यादीनां स्थानकं मत्वा श्रीसङ्घस्य पूजा कार्या स-र्वशक्त्या; यतस्तद्भक्त्या तीर्थंकरपदवी न दवीयसी भवति । यदुक्तम्--

यद्भक्तेः फलमर्हदादिपदवी मुख्यं कृषेः सस्यवत् चक्रित्वत्रिदशेन्द्रतादि तृणवत् प्रासङ्गिकं गीयते। शक्तिं यन्महिमस्तुतौ न दधते वाचोऽपि वाचस्पतेः सङ्घः सोऽघहरः पुनातु चरणन्यासैः सतां मन्दिरम् ॥४॥

दृष्टान्तो यथा--हेमसूरयश्चैकदा शाकम्भर्यां पादमवदधुः, तत्र निर्द्धनश्रे०धनाकेन स्वप्रावरणार्थभार्या-कर्त्तितस्थूलसूत्रनिष्पन्नकोरकखासरं विहारितम्; पत्तनप्रवेशे श्रीकुमारपालादि ७२ नृपश्रे०छाडाकुबेरदत्तादि

१८ सहस्रव्यवहारिवर्गे स्वस्वऋद्ध्या संमुखागते स एव खासरकल्पः त्रप्पडाधिकः श्रीगुरुभिः प्रावृतः। राज्ञोक्तम्--भगवत्पादा यूयं मदीया गुरवः--एवंविधे कल्पे प्रावृतेऽस्माकं त्रपा स्यात्। श्रीगुरुभिः प्रोक्तम्--त्वयि राज्यं कुर्वति तव साधर्मिका ईदृशा दारिद्र्योपद्रुताः कष्टेन निर्वाहं कुर्वाणाः सन्ति, तत्र भवतां कस्मान्न त्रपा स्यात्?। अस्माकं तु सामान्यवेषे गुरुतैव; सर्वज्ञोक्ताचारत्वात्। यतः--

त्यक्तसङ्गो जीर्णवासा मलक्लिन्नकलेवरः। भजन् माधुकरीं वृत्तिं मुनिचर्यां कदा श्रयेत्॥ ५॥

तदनु संजातसङ्घवात्सल्येन भग्नसाधर्मिकोद्धरणे सहस्रहाटकार्पणं मया कर्त्तव्यमित्यभिग्रहं जग्राह। एवमेकस्मिन् वर्षे साधर्मिकेभ्यः कोटिदीनारदानम्। एवं चतुर्दशवर्षेषु १४कोटयः सुवर्णस्य दत्ताः।

इति श्रीसङ्घार्चोपदेशः पञ्चमः॥



कल्पोर्वीरुहसन्ततिस्तदजिरे चिन्तामणिस्तत्करे श्लाघ्या कामदुघाऽनघा च सुरभी तस्यावतीर्णा गृहे।
त्रैलोक्याधिपतित्वसाधनसहा श्रीस्तन्मुखं वीक्षते सङ्घो यस्य गृहाङ्गणं गुणनिधिः पादैः समाक्रामति॥१॥

यथा--सुरगिरौ श्रीसोमतिलकसूरयस्तपागच्छपाः सा० जगसिंहगेहे देवं नन्तुं प्राप्ताः। सा० जगसिंहेन

सकलश्रीसङ्घमीलनपूर्वं प्रतिष्ठानिकानिवहः श्रीगुरूणामग्रे मुक्तो, गुरुभिः क्रीतादिदोषं दृष्ट्वा मुखवस्त्रिकाऽपि न विहृता । तदनु गुर्वाचारचमत्कृतेन श्रीसङ्घाय सर्वाः प्रतिष्ठानिका विश्राणिताः । सप्तशतहाटकैस्ताम्बूलः प्रदत्तः। तथा सा० वीसलभार्यासं०खीमाईनाम्न्या श्रीसोमसुन्दरसूरिसदुपदेशेन सकलगच्छसाधुसाध्वीपरिधापनिका कृता; सकलदेशसाधर्मिकगेहेषु सिताखण्डलम्भनं कृतम् । एवमन्येऽपि श्रीसङ्घार्चादृष्टान्ताः पुरातनाः सांप्रतीनाः स्वयं वाच्याः ॥

इति श्रीसङ्घार्चोपदेशः षष्ठः ॥

अथ साधर्मिकोपदेशमाह—

साधर्मिकाणां वात्सल्यं भोजनाच्छादनादिभिः । यस्तनोति नरो भावात्तज्जन्म सफलं भवेत् ॥ १ ॥

श्रीसर्वज्ञदेवनिर्ग्रन्थगुरुजिनधर्मैः साधर्मिकाः समानधर्माणः तेषां वात्सल्यं स्वजनवद्भक्तिं तनोति—

अन्नन्नदेसजाया अन्नन्नाहारवड्ढियसरीरा । जिणसासणे पवन्ना सव्वे ते बन्धवा भणिआ ॥ २ ॥

इत्यादि धर्मस्नेहं विचिन्त्य यः पुमान्; तज्जन्म सफलं स्यात् नान्येषाम् ।

यतः—न कयं दीणुद्धरणं न कयं साहम्मिआण वच्छल्लं । हिययम्मि वीयराओ न धारिओ, हारिओ जम्मो॥३॥

तत्साधर्मिकवात्सल्यं भाववशेनानेकधा भवति यथा—प्रत्युपकारवाञ्छया महेभ्यानां भोजनं साहवात्सल्यं, दुर्जनखूटव्यापारिकादीनां भीत्या भोजनदानं साण्डवात्सल्यम्, मातापितृश्वसुरपक्षादिस्वजनानां प्रीत्यादिवर्द्धनार्थं भोजनदानं स्वजनवात्सल्यम्, परं निरर्थकमेतत् त्रयं धर्मबुद्ध्यभावात्; सार्थकं तु निष्प्रत्युपकारलिप्सया धर्मबुद्ध्या सधननिर्द्धनसाधर्मिकाणां विभेदं विना समानसत्कारपूर्वमुदारचेतसा साधर्मिकवात्सल्यं महालाभाय भवति । यतः पात्रदानेऽप्युक्तम्—

उत्तमपत्तं साहू मज्झं पत्तं सुसावगा भणिआ । अविरयसम्मदिट्ठी जहन्नपत्तं मुणेअव्वं ॥ ४ ॥

अपि च—मिथ्यादृष्टिसहस्रेषु वरमेको ह्यणुव्रती । अणुव्रतिसहस्रेषु वरमेको महाव्रती ॥ ५ ॥

महाव्रतिसहस्रेषु वरमेको हि तात्त्विकः । तात्त्विकस्य समं पात्रं न भूतं न भविष्यति ॥ ६ ॥

यथा भरतचक्रिणा द्वादशव्रतधारकाणां काकिणीरत्नेन द्वादश तिलकान्युपलक्षणार्थं कृत्वा यावज्जीवं साधर्मिकवात्सल्यं कृतं राजपिण्डत्वात् साधूनामकल्पत्वेन; तथा श्रीसंप्रतिनृपेण प्रतिग्रामं त्रिखण्डभरते साधर्मिकवात्सल्यानि कारितानि । तथा वढवाणवासि सा०—रत्नाकेन अहं श्रीवस्तुपालपार्श्वे यास्यामीति

दक्षिणावर्त्तवचनं श्रुत्वा स्वप्ने सप्तदिनीं बहुमानपूर्वं सप्तलक्षमनुष्यसहितः श्रीवस्तुपालः श्रीशत्रुञ्जययात्रार्थं गच्छंस्तत्र प्राप्तः सङ्घवात्सल्यपूजापुरःसरं भोजितो दक्षिणावर्तशङ्खः श्रीवस्तुपालाय समर्पितः ।

पूर्वं श्रीऋषभान्वयो व्यरचयत् श्रीदण्डवीर्यो नृपः श्रीमांस्तीर्थपथाध्वगाऽर्हततते‍र्वात्सल्यमुच्चैस्तराम् ।
कुर्वन् सप्तमनुष्यलक्षकलितः श्रीसङ्घभक्तिं परां श्रीरत्नः कृतवांस्तदीययशसः श्रेष्ठी पुनर्यौवनम् ॥ ७ ॥

श्रे० रत्नप्रबन्धः सविस्तरः साधर्मिकवात्सल्योपरि वाच्यः ॥ इति श्रीसङ्घभक्त्युपदेशः सप्तमः ॥



सिद्धिपुरन्ध्रीवरणं श्रावकधर्मश्रियो वराभरणम् । कृतजिनमतसाकल्यं रचयत साधर्मिकेषु वात्सल्यम् ॥ १ ॥

नागपुरीयसा०--देल्हासुतः सा०--पूनडः श्रीमोजदीनसुरत्राणबीबीप्रेमकलाप्रतिपन्नबान्धवोऽश्वपतिनरपतिगजपतिमान्योऽस्ति; तेन श्रीशत्रुञ्जयप्रथमयात्रा सं०--१२७३वर्षे बिम्बेरपुरात् कृता, द्वितीया सुरत्राणादेशात् सं०--१२८६ वर्षे नागपुरात् कृता; तत्र१८००शकटानि; बहवो महीधराः, माण्डलिपुरासन्ने यावदायातस्तावत्संमुखमागत्य तेजःपालेन धवलक्कमानीतो वस्तुपालः संमुखमागात् । श्रीसङ्घधूली पवनानुकूल्यतो यां यां दिशमनुधावति तां तां गच्छति । तदस्थैरभाणि-मन्त्रीश ! इत इतो रजः, इत इतः पादोऽवधार्यताम् । मन्त्रिणा

चोक्तम्--इदं रजः पुण्यैः स्प्रष्टुं लभ्यते । अस्मिन् स्पृष्टे पापरजो दूरे नश्यति । यतः—

श्रीतीर्थपान्थरजसा विरजीभवन्ति तीर्थेषु च भ्रमणतो न भवे भ्रमन्ति ।
द्रव्यव्ययादिह नराः स्थिरसंपदः स्युः पूज्या भवन्ति जगदीशमथार्चयन्तः ॥ २ ॥

मन्त्रिपूनडौ गाढालिङ्गनप्रियालापौ संवृत्तौ; सरस्तीरे सङ्घः स्थितः ।

कदा किल भविष्यन्ति मद्गृहाङ्गणभूमयः । श्रीसङ्घचरणाम्भोजरजोराजीपवित्रिताः ॥ ३ ॥

इति चिन्तयता मन्त्रिणा भोक्तुं निमन्त्रितः; रसवती निष्पन्ना; प्रातः सङ्घः समागतः; वस्तुपालः सर्वेषां पादप्रक्षालनं तिलकं च स्वयमेव करोति स्म, एवं द्विप्रहरी लग्ना । मन्त्री तथैवानिर्विण्णः । तदा तेजःपालेन विज्ञप्तम्--देव ! अन्यैरपि सङ्घभक्तिः कारयिष्ये यूयं भुङ्ग्ध्वम्, तापो भावी, मन्त्री-मैवं वद, पुण्यैरयमवसरो लभ्यते । तदा गुरुभिरूचे--

जेण कुलं आयत्तं तं पुरिसं आयरेण रक्खिज्जा । न हु तुंबम्मि विणट्ठे अरया साहारया हुन्ति ॥ ४ ॥

तदनु मन्त्रिणैकं काव्यं गुरुभ्यः प्रहितम्--

अद्य मे फलवती पितुराशा मातुराशिषि शिखाऽङ्कुरिताऽद्य ।

यद्युगादिजिनयात्रिकलोकं पूजयाम्यहमशेषमखिन्नः ॥ ५ ॥

भोजयित्वा परिधाप्य च रञ्जितः श्रीसङ्घः। मन्त्री सहैव यात्रां गतः पूनडाभ्यर्थनातः। यात्रां कृत्वा मन्त्री पूनडश्च स्वं स्वं पुरं प्राप्तौ ॥ इति सङ्घभक्त्युपदेशोऽष्टमः ॥

---

जिनभक्तिः कृता तेन शासनस्योन्नतिस्तथा। साधर्मिकेषु वात्सल्यं कृतं येन सुबुद्धिना ॥ १ ॥

यथा—लघुकाश्मीरापराभिधे थारापद्रनगरे श्रीश्रीमाली सं०—आभुः पश्चिममण्डलीकबिरुदधारी निवसति स्म। अथैकदा मण्डपदुर्गे सं०—झांझणदेवाग्रे तद्भट्टेन—प्राघूर्णकसाधर्मिकवात्सल्यभोजनदानं विना न भुङ्क्ते सं०—आभूरित्यादिगुणवर्णनं कृतम्, ततस्तद्गुणश्रवणचमत्कृतेन तत्परीक्षार्थं प्रच्छन्नवृत्त्या पृथक् पृथक् वर्त्मना सङ्केतितदिने समकालं द्वात्रिंशत्सहस्रसाधर्मिकसङ्घेन सार्द्धं श्रीझाञ्झणोऽविच्छिन्नप्रयाणैरश्ववारैरज्ञातागमनस्वरूपः समागतश्चतुर्दशीदिने सं०—आभूप्रधाने गृहीतपौषधे निसीहीं३ कुर्वाणो जिनालये शालायां संप्राप्तः, सं०—आभूलघुभ्रात्रा जिनदासनाम्ना निमन्त्रितस्तदावासे गतो दुग्धपादप्रक्षालनपूर्वमासनेषूपवेशितः, सं०—आभूर्नमस्कारं गृणन् समागतः। तदा भ्रात्रोक्तम्—स्थालानि कीदृशानि कर्षयामि?। सङ्घपतिनोक्तम्—स्वर्णरू-

प्यमयान्येव । तदा पञ्च पञ्चशती पङ्क्तौ पङ्क्तौ स्वर्णरूप्यमयानि मण्डितानि । एवं ग्राममध्येऽपि सकलः श्रीसङ्घो भोजितः परिधापितश्च पञ्चवर्णपट्टकूलमटीभिः । तदनु सं०--झाञ्झणः सं०--आभूपादयोर्लग्नः । मदीयोऽपराधः क्षन्तव्यः, किं सुवर्णे श्यामिका लगति ?; त्वं भाग्यवान्, यस्येदृशमौदार्यमित्यादि सं०--आभूगुणोपबृंहणां कुर्वन् श्रीशत्रुञ्जयादियात्रां कृत्वा समागतो मण्डपदुर्गे ॥ इति श्रीसङ्घभक्त्युपदेशो नवमः ॥

---

चक्रे तेन जिनार्चनं स विदधे सम्यग्गुरूपासनं तत्त्वं तेन जिनागमस्य विदितं सङ्घोन्नतिं स व्यधात्।
सत्यंकारितमेव तेन सुधिया निर्वाणसौख्यं जवाद् यः साधर्मिकगौरवं वितनुते हृष्टो गुरूणामिव ॥ १ ॥

यथा सुरगिरौ सा०--जगसिंहेन त्रिशतषष्टिसाधर्मिकाः स्वराशिव्यवसायकारणेनात्मसदृक्षा महेभ्याः कृताः; प्रतिदिनमेकैकस्मिन् गेहे साधर्मिकवात्सल्यम्; एवं सर्वदाऽपि । एवमन्येऽपि श्रे०--जावडि मं०--उदयनबाहडदे सं०--पेथडझाञ्झणदे सा०--जगडू सा०--भीमादीनां दृष्टान्ताः सहस्रशः स्वयं वाच्याः । एवं भाग्यवता सङ्घवात्सल्येन स्वं जनुः सफलीकार्यम् ॥ इति साधर्मिकवात्सल्योपदेशो दशमः ॥



जिनौकः पोषधौकश्च तत्सारज्ञानलेखनम् । साधौ साधर्मिके भक्तिं कुर्वन्नल्पभवो भवेत् ॥ १ ॥

जिनभवनादिकसप्तक्षेत्रभक्तिपरो महाश्रावकः श्रावकः स्यात्, यथा—देवाधिदेवो वीतरागः, राजाधिराजश्चक्री, शैलाधिराजो मेरुस्ताराधिराजश्चन्द्रः, तथा श्रावकाधिराजः सङ्घभक्तिकृन्नरः । यतः—

नरेषु धरणीपतिस्तरुषु दिव्यकारस्करः करिष्वमरसिंधुरः फणधरेषु शेषः पुनः ।
सुपर्वसु पुरन्दरो गिरिषु रत्नसानुर्यथा तथा सुकृतवत्स्वसौ स्फुरदुपासकः कथ्यते ॥ २ ॥

तथा श्रीहेमसूरिभिरपि श्रीकुमारपालनृपाग्रे महाश्रावकलक्षणं प्रोक्तम्—

एवं व्रतस्थितो भक्त्या सप्तक्षेत्र्यां धनं वपन् । दयया चातिदीनेषु महाश्रावक उच्यते ॥ ३ ॥

एतच्छ्लोकविवरणं श्रीयोगशास्त्रवृत्तिगतं वाच्यम् ।

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिश्रीरत्नशेखरसूरि पं०—नन्दिरत्नगणिशिष्यरत्नमन्दिरगणिगुम्फितायां श्रीउपदेशतरङ्गिण्यां श्रीजिनभवनादिसप्तक्षेत्रवित्तवितरणविवेकप्रकाशकश्चत्वारिंशदुपदेशमनोहरो द्वितीयस्तरङ्गः ।



—:-:—





## अथ पूजापञ्चाशकाख्यस्तृतीयस्तरङ्गः ।

तद्यथा—

पूजया पूर्यते सर्वं पूज्यो भवति पूजया । ऋद्धिवृद्धिकरी पूजा पूजा सर्वार्थसाधनी ॥ १ ॥

जिनेन्द्रपूजया सर्वं वाञ्छितं चिन्तामणिरत्नवत् पूर्यते, तथा जिनपूजया जगत्पूज्यस्तीर्थङ्करः स्यात् । यतः--एकदा श्रीभोजेन सभायां स्तोकागमनकारणं पृष्टं धनपालपण्डितपार्श्वे । धनपालेनोक्तम्--नवीनप्रभुसेवावैयग्र्यमस्ति । राज्ञोक्तम्—मत्तोऽपि कोऽन्यः प्रभुरस्ति ?। पण्डितेनोक्तम्--शृण्वन्तु—

कतिपयपुरस्वामी कायव्ययैरपि दुर्ग्रहोऽमतिवितरता मोहेनाहो ! मयाऽनुसृतः पुरा ।

त्रिभुवनपतिर्बुद्ध्याऽऽराध्योऽधुना स्वपदप्रदः प्रभुरधिगतस्तत्प्राचीनो दुनोति दिनव्ययः ॥ २ ॥

हृष्टो नृपः ।

अपि च—देशाऽधीशो ग्राममेकं ददाति ग्रामाऽधीशः क्षेत्रमेकं ददाति ।

क्षेत्राधीशः सेतिकां संप्रदत्ते सार्वस्तुष्टः सम्पदं स्वां ददाति ॥ ३ ॥

श्रीश्रेणिकवत्; यथा--श्रीश्रेणिकोऽविरतिमानपि प्रतिदिनाष्टोत्तरशतनव्यनिष्पन्नस्वर्णयवस्वस्तिकढौकनादिविस्तरदेवपूजापुण्यप्रभावादागामिचतुर्विंशतिकायां प्रथमतीर्थङ्करः पद्मनाभाभिधानो भविष्यति श्रीमहावीरसमानदेहवर्णलाञ्छनायुष्यः। इहलोकेऽपि पूजाकरो नरः स्नात्रोत्सवे महेभ्यसङ्घपतीनामपि पूजनीयो भवति। यतः--अंह्री तीर्थपथाग्रगौ सुकृतिनौ दारिद्र्यसर्वंकषौ पाणी धन्यतमौ जगत्प्रियवचाः कण्ठो भुजौ धूर्धरौ। ईदृग्भाग्यभराऽभिराममलिपिभृद्भालं तदेषां क्रमात् पूजा माङ्गलिकेऽर्हतो दृशि जनैः सङ्घेशितुस्तन्यते ॥ ४ ॥

तथा जिनपूजा ऋद्धिवृद्धिकरी भवति। ऋद्धिर्धनधान्यादिका, वृद्धिः कुटुम्बपरिवारमानमहत्त्वप्रतिष्ठादिका; तथा श्रीजिनपूजा सर्वमनोवाञ्छितार्थप्रसाधिका; यतो जयाभ्युदयरोगोपशान्तिसन्तानप्रमुखमनोऽभीष्टाऽर्थसिद्धिर्जिनपूजातो जायते; अतो भाग्यवद्भिः परमेश्वरपूजा कार्या। इति जिनपूजोपदेशः १ ॥



जो पूएइ तिसंझं जिणंदरायं तहा विगयरायं। सो तईअभवे सिज्झइ अहवा सत्तट्ठमे जम्मे ॥ १ ॥

यस्त्रिसंध्यं विधिना जिनराजं विगतरागद्वेषं पूजयति स तृतीयभवे सिद्ध्यति, बहुलकर्माऽपि सप्ताष्टभवे मोक्षं प्राप्नोति। यतः——

जिणपूअणं तिसंझं कुणमाणो सोहए सम्मत्तं । तित्थयरनामगुत्तं पावइ सेणीयनरिंदव्व ॥ २ ॥
तथा सद्यस्तनसुरभिपुष्पाऽभावे पूजा प्रातर्वासैः कार्या ।
यदुक्तम्——प्रातः प्रपूजयेद्वासैः मध्याह्ने कुसुमैर्जिनम् । संध्यायां धूपनैर्दीपैस्त्रिधा देवं प्रपूजयेत् ॥ ३ ॥
सामान्यपुष्पैः पूजा न कार्यैव । यदुक्तं विष्णुरहस्ये--

न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः । न विशीर्णदलैः स्पृष्टैर्नाऽशुभैर्नाऽविकाशिभिः ॥ ४ ॥
पूतिगन्धान्यगन्धानि अम्लगन्धानि वर्जयेत् । पद्मपुराणे तु--

कीटकेशापविद्धानि शीर्णपर्युषितानि च । वर्जयेदूर्णनाभेन वासितं यदि शोभनम् ॥ ५ ॥
इत्यादियुक्त्या जिनपूजा कार्या । इति पूजोपदेशः २ ॥

——:०:——

पुष्पाद्यर्चा तदाज्ञा च तद्द्रव्यपरिरक्षणम् । उत्सवास्तीर्थयात्रा च भक्तिः पञ्चविधा जिने ॥ १ ॥
भक्तिः श्रीवीतरागे पञ्चप्रकारा भवति । प्रथमा पुष्पादिपूजा— चम्पकजातीशतपत्रमालतीकमलादीनि पुष्पाणि, आदिशब्दाद् मुक्ताफलहारकनकमयच्छत्राद्याभरणानि चटाप्यन्ते । आभरणपूजा शाश्वती ।

यदुक्तम्--म्लायन्ति पुष्पनिचयाः प्रहरार्द्धकेन वैगन्ध्यमेति दिवसेन कृतोऽङ्गरागः ।
जीर्यन्ति रम्यवसनान्यपि भूरिवर्षैर्नो जीर्यते युगशतैर्जिन--रत्नपूजा ॥ २ ॥

सप्तलक्षमनुष्यकलिते श्रीवस्तुपालसङ्घे श्रीअनुपमदेव्या श्रीगिरिनारे नीरप्रक्षालितस्वमलैर्द्वात्रिंशद्द्रम्मलक्षाभरणैः श्रीनेमीश्वरः पूजितस्तदनु कोटिपुष्पैः ।

यदुक्तम्--द्वात्रिंशता द्रम्मलक्षैरेकदा रैवताचले । नेमीश्वरस्यानुपमा पूजां चक्रे प्रमोदतः ॥ ३ ॥

जिनभक्तिहृष्टचेतसा तेजःपालेन द्वात्रिंशल्लक्षटङ्कैस्तानि पुनर्नव्यानि कारितानि, पुनरपि श्रीशत्रुञ्जये तैराभरणैर्मं०--अनुपमदेव्या श्रीऋषभदेवप्रतिमा पूजिता; तदा देवरपत्नीकृताभरणपूजां विलोक्य मं०--ललितादेव्याऽपि ३२ लक्षटङ्काभरणैः पूजिता; शोभनादास्या लक्षटङ्कमूल्यस्वाभरणैः पूजिता; वस्तुपालमन्त्रिणा सर्वासामाधिकमूल्यानि कारितानि, एवं देवगिरीयसं०--धाईदेवेन मुक्ताफलप्रवालचूनीहीरासुवर्णपुष्पादिभिः श्रीऋषभदेवप्रतिमाया आङ्गी कृता; तदनु नवलक्षचम्पकार्चा । तथा जिनाज्ञा सम्यग् मनसा पालनीया । यतः--

आणाइ तवो आणाइ संजमो तह य दाणमाणाए । आणारहिओ धम्मो पलालपूलव्व पडिहाइ ॥ ४ ॥

आणाखण्डणकारी जइवि तिकालं महाविभूईए । पूएइ वीयरायं सव्वपि निरत्थयं तस्स ॥ ५ ॥
तथा देवद्रव्यरक्षावृद्धिकरणं जिनपूजैव । यदुक्तम्—
वड्ढंतो जिणदव्वं तित्थयरत्तं लहइ जीवो । भक्खन्तो जिणदव्वं अणंतसंसारिओ भणिओ ॥ ६ ॥
भक्खणे देवदव्वस्स परत्थीगमणेण य । सत्तमं नरयं जन्ति सत्तवारा उ गोअमा !॥ ७ ॥
चेइयदव्वविणासे रिसिघाए पवयणस्स उड्डाहे । संजइचउत्थभङ्गे मूलग्गी बोहिलाभस्स ॥ ८ ॥
तथा, अष्टाह्निकास्नात्रोत्सवश्रीपर्युषणाकल्पचरित्रपुस्तकवाचनप्रभावनोत्सवाः क्रियन्ते, साऽपि जिनशासनोन्नतिहेतुत्वाद् जिनभक्तिरेव । यतः—
प्रकारेणाधिकां मन्ये भावनातः प्रभावनाम् । भावना स्वस्य लाभाय स्वान्ययोस्तु प्रभावना ॥ ९ ॥
एवं तीर्थयात्रोत्सवादि । इत्यादिप्रकारैः पुण्यवता जिनभक्तिः कार्या ॥ इति श्रीजिनपूजनोपदेशः ३ ॥

---

सयं पमज्जणे पुन्नं सहस्सं च विलेवणे । सयसाहस्सिआ माला अणंतं गीअवाइअं ॥ १ ॥
श्रीदेवालयप्रमार्जनेऽङ्गरूक्षकवस्त्रेण जिनप्रतिमाविलग्नरेणुप्रमार्जने वा शतोपवासपुण्यं स्यात्, केसरचन्द-

नमृगमदादिसुरभिकर्पूरादिविलेपने सहस्रोपवासजं पुण्यम् ; एवं चम्पकशतपत्रपुष्पमालाभिर्लक्षोपवासजं पुण्यम् ; स्तुतिस्तोत्रगीतनृत्तादिभावनातोऽनन्तोपवासजं पुण्यम् । यदुक्तम्--

मणसा होइ चउत्थं छट्ठफलं उट्ठिअस्स संभवइ । गमणस्स य पारंभे होइ फलं अट्ठमोवासो ॥ २ ॥
गमणे दसमं तु भवे तहेव दुवालसमं गए किंचि । मज्झे पक्खुववासो मासोवासं च दिट्ठेणं ॥ ३ ॥
संपत्तो जिणभवणे पावइ छम्मासियं फलं पुरिसो । संवच्छरियं तु फलं बारम्मि य संठिओ लहइ ॥४॥
पायक्खणेण पावइ वरिससयफलं तओ जिणे महिए । पावइ वरिससहस्सं अनंतपुन्नं जिणे थुणिए ॥५॥

एवं शतसहस्रलक्षसंख्यद्रव्यव्ययफलं प्रमार्जनादौ भवति । यथा---

पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः । जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥ ६ ॥
उक्कोसं दव्वत्थयमाराहिय जाव अच्चुअं जाव । भावत्थयेण पावइ अंतमुहुत्तेण निव्वाणं ॥ ७ ॥

यथा--श्रीरावणेनाष्टापदाद्रौ श्रीभरतेश्वरकारितवर्णप्रमाणोपेतचतुर्विंशतिजिनप्रासादे ऋषभादिमहापूजां विधाय मन्दोदरीप्रमुखषोडशसहस्रान्तःपुरीभिः समं नाट्ये क्रियमाणे स्ववीणातन्त्री त्रुटिता, तदा जिनगुणगानरङ्गभङ्गभीरुणा स्वनसामाकृष्य संहिता, तदा जिनभक्त्या तीर्थकृद्गोत्रकर्मोपार्जितम् ; महाविदेह-

क्षेत्रे तीर्थङ्करो भविष्यति । इत्यादिप्रकारैर्जिनपूजायै उद्यमः कार्यः ॥ इति जिनपूजोपदेशः ४ ॥

—:०:—

अंगग्गभावभेया पुप्फाहारथुईहिं पूअतिगं । पंचुवयारा अट्ठुवयार सव्वोवयारा वा ॥ १ ॥

अङ्गपूजाऽग्रपूजाभावपूजाभेदात् त्रिधा पूजा स्यात्; पुष्पादिचटापननैवेद्यफलपक्वान्नादिढौकनस्तुतिस्तोत्रगीतनृत्तादिभिः । यदुक्तम्—

अंगम्मि पुप्फपूआ आमिसपूआ जिणग्गओ बीआ । तइया थुइथुत्तगया तासिं सरूवं इमं होइ ॥ २ ॥

अङ्गपूजा यथा—घुसिणकप्पूरमीसं तु काउं गंधोदगं वरं । तओ भुवणनाहे ओन्हवइ भत्तिसंजुओ ॥ ३ ॥

सुकुमालेण वत्थेण सुगंधेण तहेव य । गायाइं विगयमोहाणं जिणाणमणुलूहए ॥ ४ ॥

कप्पूरमीसिउं काउं कुंकुमं चंदणं तहा । तओ जिणिंदबिंबाणि भावेणमणुलिंपए ॥ ५ ॥

वन्नगंधोववन्नेहिं पुप्फेहिं पवरेहि य । नाणापयारबंधेहिं कुज्जा पूअं वियक्खणो ॥ ६ ॥

अङ्गपूजाऽपि त्रिप्रकारा जलपुष्पाभरणैर्भवति; जिनस्नात्रविधौ चतुर्द्धा जलान्येवम्--कर्पूरपुष्पकेसरगोरोचनाऽगुरुचन्दनकल्कितगन्धोदकसहजलभेदैः स्नात्रं; सुकुमालसुरभिनिर्मलक्षीरोदकवस्त्रेणाङ्गरूक्षणं; कर्पूरकेसर-

मिश्रचन्दनविलेपनं; मृगमदादिभिर्नवनवभङ्ग्याऽऽङ्ग्यादिविधानं; शतपत्रजातीचम्पकादिसुगन्धस्मेरसारपुष्पैः सविशेषरचनाप्रकारेण पूजनं; सुवर्णरूप्यमौक्तिकपुष्पमयमुकुटाद्याभरणपुष्पगृहरचनं, परिधापनिका-पट्टकूलचन्द्रोदयबन्धनं, जिनहस्तोपरि सौवर्णबीजपूरनालिकेरपूगीफलपत्रादिमोचनम्; एवं धूपवासक्षेपाद्य-ङ्गपूजायां भवति । बृहद्भाष्ये यदुक्तम्——

न्हवणविलेवणआहरणवत्थफलगंधधूवपुप्फेहिं । कीरइ जिणंगपूआ तत्थ तिहा एस नायव्वा ॥ ७ ॥

तद्विधिः--कायकंडूयणं वज्जे तहा खेलविगंचणं । थुइथुत्तभणणं वज्जे पूयंतो जगबंधुणो ॥ ८ ॥

उचियत्तं पूआए विसेसकरणं तु मूलबिंबस्स । जं पडइ तत्थ पढमं जणस्स दिट्ठी सह मणेणं ॥ ९ ॥

अथाग्रपूजा——

इह होइ असणपूआ वरखज्जगमोअगाइभक्खेहिं । दुद्धदहिघयाईभायण तह ओअणाईहिं ॥ १० ॥

जो पंचवन्नसत्थिअबहुविहफलसलिलभक्खदीवाई । उवहारो जिणपुरओ कीरइ नेवज्जपूआ सा ॥ ११ ॥

साइमपूआइ पुणो नेयं पूगीफलपत्तगुलपमुहं । पंचंगुलितललिहणाइपुप्फपगराइ दीवाई ॥ १२ ॥

गंधव्वनट्टवाई लवणजलारत्तियाइ दीवाई । जं किच्चं तं सव्वंपि ओयरइ अग्गपूआए ॥ १३ ॥

सुवर्णरूप्याक्षतनालिकेरटुप्परकमोदकाद्यष्टमङ्गलालेखनविविधोद्यापनरसवतीढौकनमग्रपूजायां लगति ॥

भावपूजा तु--तईआ उ भावपूआ ठाउं चिअवंदणोचिए देसे । सहसत्तिचित्तथुइथुत्तमाइणा देववंदणयं ॥१४॥

विग्घोवसामिगेगा अब्भुदयपसाहिणी भवे बीआ । निव्वुइकरणी तईया फलयाओ जहत्थनामेहिं ॥१५॥

पञ्चोपचारपूजा--गन्धमाल्याधिवासगन्धमाल्यादिसंस्कारविशेषधूपप्रदीपैः; अथवा पुष्पाक्षतगन्धधूपदीपैर्वा भवति ॥

अष्टोपचारपूजा--कुसुमक्खयगन्धपईवधूवनेवज्जफलजलेहिं पुणो । अट्ठविहकम्महणणी अट्ठुवयारा हवइ पूआ॥१६॥

सर्वोपचारा पूजा--अङ्गाग्रभावविषया भवति १७भेदा, २१भेदा वा । यथा--

सव्वोवयारपूआ न्हवणच्चणवत्थभूसणाईहिं । फलबलिदीवाइनट्टगीयआरत्तियाईहिं ॥ १७ ॥

न्हवणविलेवण अंगम्मि चक्खुजुअलं च वासपूआए । पुप्फारुहणं मालारुहणं च तहेय वण्णयारुहणं ॥ १८ ॥

चुन्नारुहणं जिणपुंगवाण आहरणरोहणं चेव । पुप्फगिहपुप्फपगरो आरत्तियमंगलपईवो ॥ १९ ॥

दीवो धूवुक्खेवं नेवज्जं सुहफलाण ढोअणयं । गीअं नट्टं वज्जं पूआभेआ इमे सत्तर ॥ २० ॥

स्नानं विलेपनविभूषणपुष्पवासधूपप्रदीपफलतन्दुलपत्रपूगैः ।

नैवेद्यवारिवसनैश्चमरातपत्रैर्वादित्रगीतनटनस्तुतिकोशवृद्ध्या ॥ २१ ॥
इत्येकविंशतिविधा जिनराजपूजा ख्याता सुरासुरनरैश्च कृता सदैव ।
खण्डीकृता कुमतिभिः कलिकालयोगाद् यद् यत् प्रियं तदिह भाववशेन योज्यम् ॥ २२ ॥

इत्यादिबहुसिद्धान्तप्रकरणोक्तबहुप्रकारपूजा विधिना सर्वशक्त्या कार्या ॥ इति पूजोपदेशः ५ ॥

पुष्पैर्गन्धैर्बहुपरिमलैरक्षतैर्धूपदीपैः सन्नैवेद्यैः शुभफलगणैर्वारिसंपूर्णपात्रैः ।
कुर्वाणास्ते जगदधिपतेरर्चनामष्टभेदां सर्वाऽऽशंसारहितमतयो विश्ववन्द्या भवन्ति ॥ १ ॥

अष्टप्रकारपूजाकारिणः पुरुषा विश्ववन्द्यास्तीर्थङ्करा भवन्ति । अष्टप्रकारोपहाराप्राप्तौ प्रदीपाऽक्षतादि कार्यमेव । यतः--

निच्चंवि य संपुन्ना जइवि हु एसा न तीरए काउं । तहवि अणुचिट्ठियव्वा अक्खयदीवाइदाणेण ॥ २ ॥

अक्षतैरक्षयसौख्यं, प्रदीपैः परमतेजःप्रतापपुञ्जभासुरता; विघ्नमरकोपद्रवापहारकारिणी प्रदीपपूजा स्यात् । घृतप्रदीपपूजा विशेषतः कष्टानि पिनष्टि, मरकमान्द्यबन्दिपतनादौ कृता सर्वविघ्ननाशिनी, सामग्र्यामष्टप्रकारैव विधीयते ॥ इति पूजोपदेशः ६ ॥

अथाष्टप्रकारपूजाफलोपदेशान्नष्टौ कथयति । यथा—

पूअइ जो जिणचंदं तिन्निवि संझासु पवरकुसुमेहिं । सो पावइ सुरसुक्खं कमेण मुक्खं सया सुक्खं ॥१॥

इक्केणवि कुसुमेणं भत्तीइ वीअरायपूआए । पावइ परमविभूइं जीवो सिरिकुमारपालुव्व ॥ २ ॥

यथा श्रीकुमारपालः पूर्वभवस्वपञ्चकपर्दिकानाणकगृहीताष्टादशचम्पकपूजितवीतरागनवाङ्गपुण्यप्रसादाद् महाराजाधिराजः ७२राणकसेव्यपादारविन्दोऽष्टादशदेशभोक्ता चतुर्दशशतप्रासादकारकः सप्तव्यसननिवारको मृतापुत्रस्वमोक्ता राजर्षिः परमब्रह्मव्रतधारी स्वाऽऽज्ञावर्त्यष्टादशदेशामारिप्रवर्तकः श्रीहेमाचार्यचरणाराधक एकावतारी समभूज्जिनभक्त्या । यदुक्तम्—

कुमारो भूपोऽभूज्जगदनुपमप्रौढचरितो भवेनैकेनैवामृतपदगमी यत्सुरभवात् ।
अणोरेकस्यैतत्तव जिन ! विभो ! भक्तिनिचये न केषामाश्चर्यं जनयति फलं विश्वविदितम् ? ॥३॥

अरीन्निर्जित्योद्ध्यंवधिभुवमात्मैकपतिकां विचार्यानार्येष्वप्यखिलतनुमद्व्रातमनघाम् ।
मणीचैत्यैरुद्घां सुभगवपुषं च व्यसनहृत्स राजा त्वद्भक्त्याऽधिगतविभवो नाथ ! कृतवान् ॥ ४ ॥

जाता दिग्विजयाः कुमारनृपतेः पञ्चायुती स्यन्दना जज्ञुर्जङ्गमपर्वता इव शतान्येकादशेभेश्वराः ।

रेवन्तप्रतिमा हयाः पृथुरया लक्षाणि चैकादश प्रख्याताः पदिकाः समीपरसिका लक्षास्तथाऽष्टादश ॥५॥ इत्यादि श्रीकुमारपालप्रबन्धाद् ज्ञेयम् ॥ इति पुष्पपूजोपदेशः ७ ॥

—:-:—

अंगं गन्धसुअन्धं वन्नं रूवं सुहं च सोहग्गं । पावइ परमपियंपि हु पुरिसो जिणगन्धपूआए ॥ १ ॥

सुरभिघनसारमिश्रकेसरचन्दनवासैः पूजाकारिणां नराणां कर्पूरपालीवत् शरीरपरिमलः कर्पूरसुगन्धश्वासः स्यात् । श्रीखण्डमलयगिरीयचन्दनैः कनककीलिकाकलितान्तरालैस्तेषामङ्गेषु ऊमडिः क्रियते । सुगन्धराजभोगकल्मशालिसुगन्धनासापेयघृतादिभोजनं, केतकीयक्काथखादिरवडीएलालवङ्गमिश्रताम्बूलं, शतपत्रचम्पकदलप्रसूनमालाप्रकरभरितशय्या, पद्मिनीस्त्रीपाणिग्रहणादिभोगसामग्री स्यात्; प्रान्ते मोक्षसौख्यमपि गुणधरकुमारवत् ॥ इति गन्धपूजोपदेशः ८ ॥

—०००—

अक्खण्डफुडिअचुक्खक्खएहिं पुञ्जत्तयं जिणंदस्स । पुरओ नरा कुणन्ता पावन्ति अखण्डियसुहाइं ॥ १ ॥

आत्मीयभोजनतो विशेषशालिगोधूमादिधान्यैः कोटिलक्षप्रमाणैर्जिनाग्रतः पुञ्जत्रयं ज्ञानदर्शन-

चारित्रकल्पनारूपं कुर्वन्तः प्राणिनोऽखण्डितसौख्यानि प्राप्नुवन्ति । यतः—

अक्षतैरुज्ज्वलं स्थालं भृतं येन जिनाग्रतः । श्रेयोभिस्तादृशैरेव तैरात्मा परिपूरितः ॥ २ ॥

अपि च--किं वच्मः शुचिभाविनां सुकृतिनां यत् त्वत्पुरोलोठिभि--र्व्रैहेयैरपि तन्दुलैर्व्यसुभिरप्येवंफलान्यापिरे । सर्वत्रापि हि शालिनाम महतां भालेषु वासोऽक्षतख्यातिश्च क्षतसंभवेऽपि बहु किं सर्वोत्सवश्लाघ्यता ॥ ३ ॥

जह जिणपुरओ चुक्खक्खएहिं पुञ्जत्तयं कुणन्तेहिं । कीरमिहुणेण पत्तं अक्खण्डियं सासयं सुक्खं ॥ ४ ॥

एषा कथा पार्श्वचरित्राद्वाच्या ॥ इति अक्षतपूजोपदेशः ९ ॥



मयणाभिचन्दणागुरुकप्पूरसुअन्धगन्धधूवेहिं । पूअइ जो जिणचन्दं पूइज्जइ सो सुरिन्देहिं ॥ १ ॥

कर्पूरादिधूपैरूर्द्धगामिभिरर्चकानामूद्ध्वंगतिः सूच्यते परलोके; इहलोके तूच्चैस्तरभोगसामग्री सकललोकपूज्यता च ॥ इति धूपपूजोपदेशः १० ॥



जो देइ दीवयं जिणवरस्स भवणम्मि परमभत्तीए। सो निम्मलबुद्धिधरो रमइ नरो सुरविमाणेसु ॥ १ ॥

विमला बुद्धी देहो अक्खाणि अ हुंति वीयरागाणं । दीवयाविहिदाणफलं रयणाणि बहुप्पयाराणि ॥ २ ॥
जो जिणवरस्स पुरओ देइ पईवं पराइ भत्तीए । एमेव तस्स डज्झइ पापपयंगो न संदेहो ॥ ३ ॥
जिणबिंबाणं पुरओ दीवं दिंतस्स पवरसद्धाए । देहस्स होइ दित्ती रयणाणि बहुप्पयाराणिं ॥ ४ ॥
इहलोइअपरलोइअसुहाणि सव्वाणि तस्स सुलहाणि । परपारगेयपुरओ दिण्णो भत्तीइ वरदीवो ॥५॥

प्रदीपपूजादृष्टान्तो यथा—

मणीयारपुरे नयरे आइच्चदेवउले सयंभू नाम देवच्चओ अत्थि; अन्नयाए पओयणवसेण घंचियवराओ गहियतेल्लो पविट्ठो जिणहरं; दिट्ठा य दीवियसमुज्जोइयगब्भहरंतरे परमपुप्फेहिं पूइया वरवत्थाहरणविभूसिआ पसंतसुत्तिणो सव्वण्णुणो पडिमा; चिंतियं च तए दिण्णा मए बहूणं देवयाणां पुरओ दीवया, परं न तहा-सोहंति जहा इमस्स देवयाविसेसस्स; पूअणिज्जो पुण्णत्थिआणं पुण एस कोवि परमुत्तमत्ति मण्णमाणेण विसुद्धसद्धाए दिण्णो जिणपुरओ दीवओ; ठिओ किंचि कालं तत्थेव रोमंचियसरीरो; एयावसरे बद्धं तए भोग-सारं मणुआऊअं, पोसियं तंमि चेव जिणहरे निच्चदीवयप्पयाणेण, अहाऊक्खएण मरिऊण तप्पुण्णाणुभावेण वीयसोगनयरे महिंदसारनिवपुत्तो तेयसारो जाओ । चउरज्जाहिवई राया देवयासेविज्जमाण-

चलणकमलो, संसारवासविरत्तचित्तो, अहिसिंचिऊण जेट्ठपुत्तं मणिरहकुमारं रज्जे, निक्खवंतो महया विभूइए केवलिसमीवे परिपालिऊण सामण्णं, समुप्पण्णो विजयविमाणे सुरवरो, तओ चुओ परमपयभाई भविस्सइ।

इयं तेजसारकथा पञ्चशतीग्रन्थप्रमाणाऽस्ति, प्राकृतमनोरमाचरित्रे स्वयं वाच्या।

तथा--दीपं विधाय देवानामग्रतः पुनरेव न। गृहकार्यं च कर्तव्यं तिर्यग्रूपी भवेन्नरः॥ ६॥

इन्द्रपुरेऽजितसेनो नृपः, देवसेनः श्रेष्ठी; तद्गृहे धनसेनोष्ट्रिकगेहादेकोष्ट्रिका नित्यमेति स्म, धनिकेन कुट्टनपूर्वं वारिताऽपि न तिष्ठति स्म। ततः श्रेष्ठिना मूल्येनाग्राहि; कालेनेष्टा जाता; एकदा धर्मघोषाचार्याः समागताः; तेषां समीपे श्रेष्ठिनाऽपृच्छि। एषा मद्गृहं विना कुतोऽन्यत्र न तिष्ठति ?। सूरिणोक्तम्--एषा पूर्वभवे तव माता जिनाग्रे दीपं विधाय तद्दीपेन स्वगेहकृत्यान्यकार्षीत्; धूपाङ्गारेण चुल्हकः संधुक्षितः; तत्कर्मणाऽनालोचितेनोष्ट्री जाता; पूर्वभवस्नेहाद् गेहं न मुञ्चति॥ तेन हेतुना देवनिर्माल्यमपि स्वल्पमेव ग्राह्यं नाधिकम्; भोगाद्याशया देवश्रीखण्डतिलकं न कार्यम्; देवजलेन हस्तपादादि न प्रक्षाल्यम्; देवद्रव्यं व्याजेन न ग्राह्यम्॥ इति प्रदीपपूजोपदेशः ११॥



ढोअइ बहुभत्तिजुओ नेवज्जं जो जिणंदचंदाणं । भुंजइ सो वरभोए देवासुरमणुअनाहाणं ॥ १ ॥

पक्वान्नानि बहूनि दुग्धधवला मण्डा अखण्डोज्ज्वलाः शालिर्दालिरुपात्तपीतिमगुणा नासानिपेयं घृतम् ।
शाकानि प्रचुराणि पित्तशमितारम्भाः करम्भा दधि स्निग्धं वारि लवङ्गसङ्गसुभगं देवाग्रतो ढौक्यते॥२॥

इत्यादिप्रकाररसवतीभिर्नैवेद्यपूजां यः करोति स विपुलभुक्तिं भोजनादिसामग्रीमवाप्नोति । यदुक्तम्—
अत्युष्णं शालिभोज्यं वरतरतुवरीसूपमायोज्यमाज्यं साकं शाकैः सुपाकैः कतिभिरभिमतैर्माषगोधूममध्यम् ।
भव्यं गव्यं सघोलं नवसरललसत्प्रेयसीप्रेमदत्तं भुङ्क्ते स्थाले विशाले प्रतिदिवसमसौ यस्य पार्श्वः प्रसन्नः ॥३॥

॥ इति नैवेद्यपूजोपदेशः १२॥

वरतरुपवरफलाइं ढोअइ जो जिणवरस्स भत्तीए । जम्मंतरे वि सहला जायंति मणोरहा तस्स ॥ १ ॥

नालिकेरपूगीफलादिफलानि यो जिनाग्रतो ढौकयति तस्य मनोरथाः सफला भवन्ति । यतः—
दीवालीपव्वदिणे दीवं काऊण वद्धमाणग्गे । जो ढोइ वरसफले वरसं सफलं भवे तस्स ॥ २ ॥

अतः पूगीफलढौकनाभिग्रहेणैव स्वादिमं व्यापारणीयम् ॥ इति फलपूजोपदेशः १३॥

ढोअइ जो जलभरिअं कलसं भत्तीइ वीअरागाणं । सो पावइ परमपयं सुपसत्थं भावसुद्धीए ॥ १ ॥
वरवारिभरिअघडगे पुरओ ढोअंति जे जिणंदस्स । ते निम्मलनाणधरा धरंति सुगईसु अप्पाणं ॥ २ ॥

पवित्रमधुरमिष्टसुगन्धनिर्मलशीतलकर्पूरैलोसीरलवङ्गवासितजलभृतकलसान् ये ढौकयन्ति ते निर्मलज्ञाननीरपूरितहृद्घटा भवन्ति ॥ इति जलढौकनोपदेशः १४॥

—∞—

अष्टप्रकारपूजाफलदृष्टान्ताः पूजाऽष्टकाद्वाच्याः ॥

मनोवाक्कायवस्त्रोर्वीपूजोपकरणस्थितौ । शुद्धिः सप्तविधा कार्या श्रीजिनेन्द्रार्चनक्षणे ॥ १ ॥

भाग्यवता जिनार्चाऽवसरे शुद्धिर्विधेया । यथा--मनःशुद्धिः गृहाट्टव्यापारस्त्रीध्यानपरिहारेण भवति । यतः--गइउं कलेवर चेईअहरि मनमिल्हे विणु दिट्ठि । बिहुं लाहां एक्कू नहीं सूनी हुई ससड्ढि ॥२॥

सावद्यवचनपरिहारमौनमुद्रया वचनशुद्धिः । यतः—

पडिलेहपूअभोअणविआरभूमीपडिक्कमणकाले । मग्गे गच्छंतेण मुणिणा मोणं विहेयव्वं ॥ ३ ॥

सावद्यकार्यसाधिका हस्तभ्रूसंज्ञाऽपि जिणहादण्डनायकवन्न कार्या । यथा--श्रीभीमनृपेण चौरनिग्रहाय

जिणहाकस्य निष्कोशः खड्गः समर्पितः । तदा सेल्लहस्तशत्रुशल्येन मत्सरिणोक्तम्——

खंडउं तस्स समप्पिइ जस खंडइ अभ्यास । जिणहा इक्क समप्पीइ तुल वेलउं कप्पास ॥ ४ ॥

जिणहेनोक्तम्——

असिधरधणुधरकुंतधरसत्तिधरा य बहूअ । सत्तुसल जे रणिसूर जणणि तु विरल पसूय ॥ ५ ॥

तुष्टेन भीमेन शिक्तिः पृष्टा । तदाह——

देवदीपोत्सवे प्राप्ते प्रवृत्ते दन्तिना मदे । एकच्छत्रं करिष्यामि तव राज्यं महीतले ॥ ६ ॥

राज्ञा धवलक्कपुरं दत्तम् । जिणहाकस्तत्र तिष्ठन् चौरधाटीलुण्टाकनामरहितं निष्कण्टकं राज्यं करोति स्म । कलिकुण्डश्रीपार्श्वप्रासादादि४जिनविहाराः कारिताः । त्रिकालं जिनार्चा मौनमुद्रया करोति स्म; एकदा सुराष्ट्रागतेनैकेन चारणेन जिणहाऽऽज्ञापरीक्षार्थं राजकरभो गृहीतः, तदा तज्जनैर्बद्ध्वा नीतो जिणहाऽऽवासे । मध्याह्ने मन्त्री जिनार्चामेकाग्रमनसा कुर्वन्नस्ति स्म । तैः प्रोक्तम्—स्वामिन् ! करभचौर एषः । मन्त्रिणाऽङ्गुलीसंज्ञया शीर्षच्छेदनमादिष्टम्, तैर्नावगतम्; पुनर्मन्त्रिणा पुष्पवृन्तं लूनम्; तदा चारणेन भयभीतेनाभाणि—

इक जिणहा नइ जिणवरह न मिलइ तारो तार । जेहिं अमारण पूजीइ ते किम मारणहार ? ॥ ७ ॥

इक्का चोरी साकरी जा खोंलडइ न माइ । बीजी चोरी जु करइ तु चारण चोर न थाइ ॥ ८ ॥

मन्त्रिणा पातकमिथ्यादुष्कृतं दत्त्वा तत्स्वरूपं पृष्ट्वा परिधाप्य मुक्तः ॥ स्नानादिशुद्ध्या कायशुद्धिः कार्या । यदुक्तम्—

वत्थेण बंधीऊणं आसं अहवा जहा समाहीए । वज्जेयव्वं तु तया देहंमि विकंडूयणमाइ ॥ ९ ॥

कायकंडूयणं वज्जे तहा खेलविगंचणं । थुइथुत्तभणणं चेव पूअंतो जगबंधुणो ॥ १० ॥

वस्त्रशुद्धिर्यथा—

न कुर्यात् संहितं वस्त्रं देवकर्मणि भूमिप ! । न दग्धं न तु वै छिन्नं परस्य तु न धारयेत् ॥ ११ ॥

कटिस्पृष्टं तु यद्वस्त्रं पुरीषं येन कारितम् । मूत्रं च मैथुनं चापि तद्वस्त्रं परिवर्जयेत् ॥ १२ ॥

खण्डितं संहितं छिन्नं रक्तं रौद्रैः कुवर्णकैः । दानं पूजा तपो होमसंध्यादि निष्फलं भवेत् ॥ १३ ॥

एकवस्त्रो न भुञ्जीत न कुर्याद्देवताऽर्चनम् (पुरुषमाश्रित्य)। न कञ्चुकं विना कार्या देवार्चा स्त्रीजनेन तु ॥१४॥

पृथिवीशुद्धिः मलश्लेष्माद्यशुचिसंगतिरहिता कार्या । पूजोपकरणानि कलशभाजनलोट्टकादीनि गृहकार्ये न व्यापारणीयानि । स्थितिशुद्धिः चतुरशीत्याशातनापरिहारेणैव स्थेयम्; चैत्यवन्दनासनकायोत्स-

तन्नगरनृपेण राजपाट्टिकानिर्गमेन दृष्टः नीतः पश्चात्क्रिनः, दीक्षां गृहीत्वा स्वर्गे समागतः । कालेन राजर्षि-ज्ञानीभूय तद्बोधनायागात्तत्र पुरे; तल्लोको राजा वन्दनाय गतः; सा मालकृषाणि वन्दितुमागता, राजानं वीक्ष्य प्रस्तुताः राज्ञोऽपि तद्दर्शने मानुकैस्तः; महर्षिणा सर्वो वृत्तान्त उक्तः; ततः पूर्वभववृत्तान्तः मुनिगदः--क्वापि पुरे श्रीमान् व्यवहारी पूजां कुर्वन् पद्मासनोपरि पतितैः कैश्चित्पुष्पैर्जिनार्चा चक्रे; अनालोचिततत्कर्मणा मालाकुले जन्म; देवपूजाप्रभावाच्च राज्यं, पूर्वभवस्मृतिः, कालेन दीक्षा; स्वर्गं मोक्षं च प्राप्स्यति । इत्थं शुचिपुष्पपूजाकथां श्रुत्वा शुचिपुष्पार्चनविधौ चिन्त्यम् ॥ इति जिनार्चोपदेशः १६ ॥

वस्त्रैर्वस्त्रविभूतयः शुचितरालङ्कारैरलङ्कृतिः पुष्पैः पूज्यपदं सुगन्धतनुता गन्धैर्जिने पूजिते ।
दीपैर्ज्ञानमनाकुलं निरुपमा भोगाश्च रत्नादिभिः नैवेद्यानि किमद्भुतं शिवपदप्राप्तिस्ततो देहिनाम् ? ॥१॥

वस्त्रैश्चन्द्रोदयाङ्गलक्षणपरिधापनिकाध्वजपताकादिपूजानः प्रतिष्ठानिकापूर्णकलशमस्तकीपुडनापनेर्मासिर्च-तीपुरोदस्तपीठगजवडिचोरीयावडिर्नीग्स्नानचापननरतल्हरीरेदकनाडल्लापट्टकूलकमलचनावीर्प्रमुखवस्त्रशृङ्गारः स्यात् । तथा स्वर्णचक्षुःश्रीवत्सहारकपोलवीजपूरपालठीकरमुकुटतिलकाद्याभरणप्रदानेन आभरणालङ्कृतस-

वाङ्गोपाङ्गः स्यात् । यथा—दमयन्त्या पूर्वभवे वीरमतीनाम्न्या २४ जिनानां रत्नतिलकानि कारितानि । तत्पुण्यानुभावेन तिलकालङ्कृतललाटाऽहर्निशं कान्तिनिर्णाशिततमःप्रचारा त्रिखण्डाधिपतिनलनरेन्द्रपट्टराज्ञी दमयन्ती बभूव ॥ पुष्पपूजया तीर्थंकरपदवीं लभते, यतस्तीर्थंकराः पूर्वपूर्वतीर्थकृत्पूजां कृत्वैव पूज्यत्वं लभन्ते । यदुक्तम्—

अरिहन्तसिद्धपवयणगुरुथेरबहुस्सुए तवस्सीसु । वच्छलया इमेसिं अभिक्खनाणोवओगे अ ॥ २ ॥

इत्यादि २० स्थानकाराधनपुण्येनैव ॥ तथा गन्धपूजया सुगन्धतनुः कमलकर्पूरकस्तूरिकावत् कायपरिमलः स्यात् । दीपपूजया केवलज्ञानावाप्तिः । यतः—

धूपं दहति पापानि दीपो मृत्युविनाशनः । नैवेद्यैर्विपुलं राज्यं प्रदक्षिणा शिवप्रदा ॥ ३ ॥

रत्नढौकनाच्चक्रवर्त्तिपदवीं प्राप्नोति; किं बहुना ? मोक्षपदप्राप्तिरपि स्यात् । यतः—

वीतरागं स्मरन् योगी वीतरागत्वमश्नुते । ईलिका भ्रमरीभीता ध्यायन्ती, भ्रमरी यथा ॥ ४ ॥

॥ इति जिनार्चोपदेशः १७ ॥

जिनस्य पूजनं हन्ति प्रातः पापं निशाभवम् । आजन्मविहितं मध्ये सप्तजन्मकृतं निशि ॥ १ ॥

प्रातः परमेश्वरपूजा रात्रिलग्नपापहा भवति; कुलाचारव्यवहारेण जिनवन्दनपूजनादिसमाचरणात् । मध्याह्ने तु भोजनादिकं त्यक्त्वा महाभावकृता मध्याह्नपूजा आजन्मकृतपापहा स्यात् । संध्यायां तु गृहव्यापारचिन्तां कृत्वा निश्चिन्तः शुभध्यानमारूढो जिनं पूजयति । सा पूजा सप्तजन्मकृतपापहा । यतः कालवेलाकृता पूजा महालाभाय भवति । यतः—

जलाहारौषधस्वापविद्योत्सर्गकृतिक्रियाः । सत्फलाः स्वस्वकाले स्युरेवं पूजा जिनेश्वरे ॥ २ ॥

सा चैकाग्रमनसा कार्या, पेथडदेसङ्घाधिपतिवत् । यथा—पेथडदेवस्त्रिकालं देवपूजां करोति स्म। एकदा देवपूजाऽवसरे जयसिंहनृपेण पञ्चषवारमन्यान्यपार्श्वादाकारितोऽपि यदा नागतस्तदा नरेन्द्र एव सदनमागत्य दूरतः पेथडं पृथुडम्बरदेवपूजापरं वीक्ष्य पश्चाद्देशासीनं नानाप्रसूनार्पकं जनमुत्थाप्य प्रच्छन्नमुपविश्य च स्वयं पुष्पाणि पाणिपद्मैरर्पयितुं लग्नः; परं कुसुमार्पणविधिमजानन्नन्यान्यर्पयत्; तदा पेथडः पश्चादालोकयन्नृपं दृष्ट्वा यावदभ्युत्तिष्ठति तावत्करे धृत्वा नृपस्तमुपवेश्य देवपूजैकाग्रतारं जितचेता उवाच—यदि मदीये गृहे महदपि कार्यं स्यात् तदा त्वया पूजाक्षणे नागन्तव्यम्; इत्युक्त्वा स्वस्थानं प्राप्तः ।

एवमेकाग्रचेतसा त्रिकालदेवपूजोपक्रमः कार्यः ॥ इति जिनार्चोपदेशः १८ ॥



स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ॥ १ ॥

यः श्रद्धावासनावासितात्मा जिनपूजां तनोति तस्य स्वर्गसौख्यं गृहाङ्गणवत् सुगमम्, तथा राज्यलक्ष्मी-वशवर्त्तिनी स्यात् । यथा देवपालगोपालेन गोवृन्दं चारयता नदीपतिततटीमध्ये जिनप्रतिमा दृष्टा; वन-मध्ये कुटीरकं कृत्वा स्थापिता; पूजां विना न भोक्ष्ये इत्यभिग्रहं लात्वा सर्वदा पूजयति स्म । एकदा नद्यां पूरः समा-यातः, सप्तदिनीस्थितम् । सप्तोपवासी जाता । अष्टमदिने पूजां कृत्वा भोजनं कृतवान् । शासनदेवता तुष्टा वरं वृणु । तन्नगरराज्यं मार्गितम् । तद्दत्तम् । साहङ्कारसामन्ता देवतया चित्रामसैन्यमधिष्ठाय बद्धा वश-वर्त्तिनः कृताः । यावज्जीवं राज्यं प्रतिपाल्य स्वर्गं गतः, सौभाग्यादिगुणश्रेणिस्तस्य देहगेहे स्वेच्छया विल-सति; संसारः सुतरः स्यात्; मोक्षसौख्यमपि करतले लुठति; इति जिनपूजाफलं ज्ञात्वा तद्विषये उद्यमः कार्यः ॥ इति जिनार्चोपदेशः १९ ॥

जिनपूजनं जनानां जनयत्येकमपि संपदो विपुलाः । जलमिव जलदविमुक्तं काले शस्यश्रियो ह्यखिलाः ॥१॥

अपरपुण्यकरणीयकरणाभावेऽपि जिनपूजनाख्यमेकं पुण्यं कृतं राज्यऋद्धिभोगादिसंपदो विपुलाः पुण्यानुबन्धिपुण्यत्वेन चटत्प्रकर्षाः संपादयति; इव यथा; मेघमुक्तं जलं काले अवसरे आर्द्रामघादिनक्षत्रेषु अखिला वनस्पतिश्रियो निष्पादयति। दृष्टान्तो यथा--एकस्मिन् गिरौ पुलिन्दः, पुलिन्दी वसति स्म। तत्र मुनिरागतस्तयोरग्रे जिनपूजाफलं प्रोक्तम्। लघुकर्मत्वात्पुलिन्द्या रुचितम्। प्रतिपन्नम्। ततो वनदेवकुले श्रीआदिनाथं वनवृक्षपत्रपुष्पैः पुलिन्दी पूजयति स्म। वणिग्देवोऽयं नात्मपूजार्ह इति पुलिन्दो वारं वारं निषेधयति स्म। परं सा न तिष्ठति स्म। कियता कालेन सा मृत्वा नृपसुता जाता। क्रमेण यौवनं प्राप्ता। गवाक्षस्थाऽधस्तादागतं तमेव कार्बटिकं दृष्ट्वा जातिस्मृतिमती। भिल्लमाकार्योक्तं--मामुपलक्षयासि ?। तेनोक्तम्--त्वां को नोपलक्षयति। तयोक्तम्। तथा न। पूर्वभवे तव पत्नी अहमासम्। परं त्वया मदुक्तं न कृतम्।

यतः----अडविहिं पत्त नईइ जल तोइ न वूढा हत्थ। अज्जवि तेह कवाडीयह! दीसइ तेअ अवत्थ ॥२॥

इत्युक्त्वा सोऽपि जिनपूजायां दृढीकृतः। सा राज्यसुखं प्रतिपाल्य स्वर्जगाम ॥ इति जिनार्चोपदेशः २०॥



यद्भक्तिः सर्वज्ञे यद्यत्नस्तत्प्रणीतसिद्धान्ते । यद्वन्दना यतीनां फलमेतज्जीवितव्यस्य ॥ १ ॥

भाग्यवता एतज्जीवितव्यस्य फलं ग्राह्यम् । यद्भक्तिः श्रीवीतरागे सा स्वल्पाऽपि भावविशेषेण विहिता महालाभाय भवति । न त्वन्या बहुतराऽप्यभावकृता ।

यदुक्तम्—विकल्पेन पुनर्देवार्चनं दानं करोति यः । स स्वं हारयते पुण्यमत्रोदाहरणे शृणु ॥ २ ॥

तथाहि वणिजौ कापि पुरे मण्डयतामुभौ । नन्दको भद्रकाख्यश्च नैकट्येनाऽऽपणद्वयम् ॥ ३ ॥

भद्रकः प्रातरुत्थाय नित्यं याति निजापणे । नन्दको देवपूजार्थं पुनर्याति जिनालये ॥ ४ ॥

भद्रकश्चिन्तयत्येवमहो ! धन्योऽत्र नन्दकः । त्यक्तान्यकृत्यो यः प्रातर्जिनेन्द्रं नित्यमर्चति ॥५॥

अहं तु निर्धनः पापी धनोपार्जनलालसः । अत्रागत्य मुखं प्रेक्षे पामराणां दिनोदये ॥ ६ ॥

धिग् धिग् मे जीवितं गोत्रमितिध्यानजलेन सः । मलं क्षालयति स्वीयं पुण्यबीजं च सिञ्चति ॥७॥

चिन्तयन्नन्दकस्त्वेवं मम देवार्चनक्षणे । भद्रको नित्यसज्जोऽयं धनं बह्वर्जयिष्यति ॥ ८ ॥

अभिग्रहगृहीतोऽहं किं करोम्यधुना पुनः । देवार्चायाः फलं दूरे सद्यो हानिर्धनस्य तु ॥ ९ ॥

कुविकल्पैरिमैरेष कृतं हारितवान्निजम् । एकतानमनोभिस्तत्कार्यं देवार्चनं बुधैः ॥ १० ॥

तथा यद्यत्नः सारपठनवाचनलेखनाद्युपक्रमः सर्वज्ञोक्तसिद्धान्ते । तथा यद् यतीनां चारित्रपात्राणां वन्दनं वसहीसयणासणभत्तपाणेत्यादिदानपर्युपासनं तदपि जीवितफलम् ।

यदुक्तम्--भवणं जिणस्स न कयं न य बंभं नेअ पूइआ साहू । दुद्धरवयं न धरियं जम्मो परिहारिओ तेहिं ॥११॥

इति जिनार्चोपदेशः २१ ॥

---

एकैव हि जिनपूजा दुर्गतिगमनं नृणां निवारयति । प्रापयति श्रियमखिलामा मुक्तेर्भक्तितो विहिता ॥१॥

अपरपुण्यापेक्षं विनाऽप्येकैव जिनार्चा दुर्गतिं नरकादिकां निषेधयति, श्रियं तीर्थकरादिपदवीं प्रापयति ।

यतः—इक्कावि सा समत्था जिणभत्ती दुग्गइं निवारेउं । दुलहाइं लहावेउं आसिद्धिपरंपरसुहाइं ॥ २ ॥

अत एव सर्वपुण्यकरणीयमुख्यतया निःसङ्गैरपि यतिभिः सदुपदेशदानादिना भव्यजीवेभ्यः कार्यते ।

यदुक्तम्—पूजा प्रभावनाहेतुः कार्यते संयतैरपि । दिव्यैः पुष्पैः सुराऽऽनीतैः श्रीवज्रस्वामिना यथा ॥ ३ ॥

प्रसिद्धा कथा ॥ इति जिनार्चोपदेशः २२ ॥

फलं पूजाविधातुः स्यात् सौभाग्यं जनमान्यता । ऐश्वर्यं रूपमारोग्यं स्वर्गमोक्षसुखान्यपि ॥ १ ॥

श्रीजिनपूजाकारकस्य सौभाग्यराज्यऋद्धिस्वर्गमोक्षसौख्यानि भवन्ति । यदुक्तम्—

खीरेण जो अभिसेअं करइ जिणंदस्स भत्तिराएण । सो खीरधवलविमले रमइ विमाणे सुचिरकालं ॥ २ ॥
दहिकुम्भेहिं जिणंदं जो सिंचइ सो अ सुरविमाणेसु । उप्पज्जइ लच्छिधरो देवो दिव्वेण रूवेण ॥३॥
इत्तो घयाभिसेअं जो कुणइ जिणेसरस्स पययमणो । सो होइ सुरहिदेहो सुरपवरो सुरविमाणेसु ॥ ४ ॥
कंचणमोत्तियविद्दुमरयणाभरणेहिं भावसंजुत्तो । जो पूअए जिणंदं सो पावइ सासयं ठाणं ॥ ५ ॥

यथा श्रीवस्तुपालमन्त्रिणा स्वकारितसपादलक्षश्रीजिनबिम्बानां श्रीशत्रुञ्जयजिनबिम्बानां च सुवर्णरत्नमयाऽऽभरणानि कारितानि ॥ इति जिनार्चोपदेशः २३ ॥



यः पुष्पैर्जिनमर्चति स्मितसुरस्त्रीलोचनैः सोऽर्च्यते यस्तं वन्दत एकशस्त्रिजगता सोऽहर्निशं वन्द्यते ।
यस्तं स्तौति परत्र वृत्रदमनस्तोमेन स स्तूयते यस्तं ध्यायति क्लृप्तकर्मनिधनः स ध्यायते योगिभिः ॥ १ ॥

यश्चम्पकादिसुरभिपुष्पैः श्रीजिनं पूजयति स विकसितप्रेमपरवशदेवाङ्गनानयनारविन्दैः सर्वाङ्गं पूज्यते;

को भावः ?; पुरन्दरः स्यात् ।

यदुक्तम्——चित्रं जगत्त्रयीभर्तुः संलग्ना कुसुमाऽऽवली । स्वर्गापवर्गसंप्राप्तिफलं भव्येषु यच्छति ॥ २ ॥

दृष्टान्तो यथा--महाराष्ट्रे महाराष्ट्रे ग्रामे हल्लूरनामनि । अशोको मालिकोऽभ्यर्च्य नवपुष्पाज्जिनं ततः ॥३॥

नवलक्ष्या नवकोट्या द्रम्माणां स्वर्णरत्नयोः । प्रत्येकमीश्वरो ग्रामनवलक्षेश्वरस्ततः ॥ ४ ॥

नृपो नवनिधिस्वामी दीक्षित्वा पार्श्वसन्निधौ । अनुत्तरसुरो जज्ञे राज्यं प्राप स सेत्स्यति ॥ ५ ॥

पूर्वं नवाङ्गं नवभिः प्रसूनैः पूजा कृताऽशोककमालिकेन ।

ततो नवस्तेषु भवेषु लक्ष्मीं नवां नवां प्राप शिवर्द्धिमन्ते ॥ ६ ॥ अपि च--

अस्सोगो नाम माली नवकुसुमजिणारोहणेणं फलेणं पत्तेयं पाविऊणं धणकणगमणी लक्खकोडी नवाओ । रम्मा गामाण लक्खा नव नव निहिणो संजमं पासपासे पालित्ताऽणुत्तरम्मी गय तयणु तओ सिज्झही सो विदेहे ॥७॥

एवमन्येऽपि जिनवन्दनस्तवनध्यानफलदृष्टान्ताः स्वयं यथाश्रुता वाच्याः ॥ इति जिनार्चोपदेशः२४ ॥



नौरेषा भववारिधौ शिवपदप्रासादनिःश्रेणिका मार्गः स्वर्गपुरस्य दुर्गतिपुरद्वारप्रवेशाऽर्गला ।

कर्मग्रन्थिशिलोच्चयस्य दलने दम्भोलिधारासमा कल्याणैकनिकेतनं निगदिता पूजा जिनानां परा ॥१॥
श्रीजिनपूजावेडा संसारसागरोत्तारे, तथा मोक्षपदप्रासादारोहणे सोपानपङ्क्तिः ।
यदुक्तम्——पूआइ भावसुद्धी भावविसुद्धीइ सुकयसंपत्ती । सुकएण होइ सुगई सुगईइ परंपरा मुक्खो ॥२॥
तथा स्वर्गनगरस्य आध्वरो मार्गः, दुर्गतिपुराणि नरकावासास्तेषु प्रवेशनिषेधेऽर्गला; तथा दुष्क-
र्मपर्वतभेदे वज्रसमाना, यतो भोगान्तरायलाभान्तरायकर्मणां क्षयो जिनपूजया स्यात् ॥
यतः--तवनियमेण य मुक्खो दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं अणसणमरणेण इंदत्तं ॥३॥
तथा माङ्गलिकानां निकेतनं निवासस्थानम् । यदुक्तम्—
उवसमइ दुरिअवग्गं हरइ दुहं कुणइ सयलसुक्खाइं । चिंताईयं पि फलं साहइ पूआ जिणंदाणं ॥ ४ ॥

॥ इति जिनार्चोपदेशः २५ ॥

---

नेत्रानन्दकरी भवोदधितरी श्रेयस्तरोर्मञ्जरी श्रीमद्धर्ममहानरेन्द्रनगरी व्यापल्लताधूमरी ।
हर्षोत्कर्षशुभप्रभावलहरी भावद्विषां जित्वरी पूजा श्रीजिनपुङ्गवस्य विहिता श्रेयस्करी देहिनाम् ॥१॥

श्रीजिनार्चा नेत्रानन्दकारिणी कृता कारिता दृष्टाऽनुमोदिताऽपि बोधिलाभाय भवति । दृष्टान्तो यथा--जयन्तीनगर्यां नरसिंहो राजाऽपुत्रो राज्यं पालयति स्म। तत्रैव कमलश्रेष्ठी; तत्पुत्रः सुन्दरकुमारो रूपलावण्यसौभाग्यविनयादिगुणरमणीयो राज्ञः प्राणेभ्योऽप्यत्यन्तवल्लभः पुत्रत्वेन स्थापितः । स्वाऽर्द्धासने सर्वदाऽपि राजा तं कुमारमुपवेशयति स्म । एकदा तस्मिन्नगरे श्रीपालश्रेष्ठी कोटीध्वजः षट्त्रिंशतक्रयाणकादिबहुवस्तुयुक्तः समागतः। रत्नमौक्तिकप्रवालभृतस्वर्णमयस्थालोपरि दिव्यमहर्घ्यसुरभिसहस्रदलविकसितकमलं मुक्त्वा राज्ञो मिलितः। तत्परिमलेन सभा हृतहृदया जाता। राज्ञा कमलं करे गृहीत्वा मनसि चिन्तितम्--सुगन्धकमलं मुधैव स्वदुर्गन्धाशुचिशरीरसङ्गेनापवित्रीकरोमि । ततोऽत्यन्तवल्लभसुन्दरकुमाराय समर्पितम् । तेनापि गृहं गच्छता जिनप्रासादं दृष्ट्वा चिन्तितम्--एवंविधं कमलं यदि जिनपूजायै समेति तदा किं विलोक्यते ?। ततः पूर्वपूजितजिनप्रतिमामस्तकोपरि मुकुटस्थाने चटापितं हर्षेण। तेनाऽतीव शोभा जिनप्रतिमायाः समजनि। तदवसरे व्यवहारिपुत्रिकाचतुष्टयं देवनत्यर्थमागतम्। जिनपूजामत्यन्तरमणीयां चित्ताह्लादकारिणीं दृष्ट्वा कमलचटापकसुन्दरपुण्यमन्वमोदयत्। ततः कुमारेण तत्कन्याचतुष्टयं परिणीतम्। तत्पुण्येन पञ्चापि देवलोके महर्द्धिकाः सुरा जाताः, ततश्च्युताः प्रौढव्यवहारिसुताः संजाताः; तथैवैकदा जिनपूजां दृष्ट्वा जातिस्मृतिमवाप्य साधुधर्ममवाप्य केवलज्ञानमुपार्ज्य

मुक्तिपदं प्राप्ताः। तथा संसारसागरतरी, श्रेयःकल्पवृक्षमञ्जरी, धर्मनरेश्वरनगरी, आपद्वल्लीधूमरी, जयमाङ्गलिककारिणी जिनपूजा कार्या ॥ इति जिनार्चोपदेशः २६ ॥



दर्शनाद् दुरितध्वंसी वन्दनाद्वाञ्छितप्रदः । पूजनात् पूरकः श्रीणां जिनः साक्षात्सुरद्रुमः ॥ १ ॥

श्रीजिनप्रतिमापूजावन्दनदर्शनेनाऽपि सर्वऋषिहत्याऽऽदिपातकानि भाववशाद्विलयं व्रजन्ति । यतः--

दुरितं दूरतो याति साधुवादः प्रवर्तते । दारिद्र्यमुद्रा विद्राति सम्यग् दृष्टे जिनेश्वरे ॥ २ ॥

दृष्टान्तो यथा--अर्बुदाचलाधिपतिना परमारपाल्हणेन रीरीप्रतिमा गालिता । तत्पित्तलेनाऽचलेनाऽचलेश्वरशण्डः कारितः । तत्पातकेन गलितकुष्ठी जातः । गोत्रिभी राज्यं गृहीतम्, मरणभीत्या देशान्तरे निर्गतो भ्रमन् शीलधवलाचार्याणां मिलितः । जिनार्चागालनपातकं प्रोक्तम् । गुरुभिः प्रतिबोधो दत्तः । पश्चात्तापाद् गुरुपादे लगित्वा स्थितः । हे भगवन् ! पातकक्षयोपायं कथय प्रसद्य सद्यो दीने मयि । गुरुभिरुक्तम्--राजन् ! प्रासादप्रतिमादिपुण्यं कुरु कुरु । तदनु तेन स्वनाम्ना प्रह्लादनपुरं निवेशितम् । तत्र स्वकारितषोडशस्वर्णकपिशीर्षकरम्ये पाल्हणविहारे श्रीपार्श्वनाथस्य प्रतिमा कारिता श्रीचन्द्रप्रभादिप्रासादाश्च । त्रिसन्ध्यं पूजां करोति स्म । गवाक्षस्थः साह्लाद-

चेतसा श्रीपार्श्वनाथप्रतिमां निरन्तरं विलोकयति स्म। तत्पुण्यानुभावेन नष्टः कुष्ठः। यावज्जीवं जिनभक्तिं प्रतिपाल्य दिवं गतः । यथा जिनवन्दनेन वाञ्छितप्राप्तिः, तथा श्रीणां परिपूर्णता । किं बहुना ? साक्षात्कल्पद्रुम एव जिनः ॥ इति जिनार्चोपदेशः २७ ॥



पापं लुम्पति दुर्गतिं दलयति व्यापादयत्यापदं पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम् ।
वैराग्यं विदधाति पल्लवयति प्रीतिं प्रसूते यशः स्वर्गं यच्छति निर्वृतिं च रचयत्यर्चाऽर्हतां निर्मिता ॥ १ ॥

श्रीजिनार्चा भावविहिता सती अनादिकालानन्तभवोपार्जितपापं लोपयति । यदि जिनेन्द्रकथा श्रुता व्याख्याता सर्वपापहा तर्हि पूजा कृता किमुच्यते ? । यतः--

चिरसंचिअपावपणासणीइ भवसयसहस्समहणीए । चउव्वीसजिणंदविणिग्गयकहाए वोलंतु मे दिअहा ॥२॥

पापाऽभावेदुर्गतिरपि न स्यात्; तथाऽऽपदं कष्टपरम्परां वधबन्धाऽकालमरणादिकां विनाशयति; तथा पुण्यप्राग्भारं सञ्चिनुते वर्द्धयति । यदुक्तम्--

जिणवंदणं कुणंतो हणइ नरो दुट्ठकम्मसंघायं । पावइ पुन्नं विउलं जह तहमेअं निसामेह ॥ ३ ॥

होइ चउत्थोवासस्स जं फलं चिन्तिएण मणसावि । छट्ठोवासफलं पुण उट्ठियमत्तस्स संपडइ ॥ ४ ॥
गमणारम्भे संपडइ अट्ठमभत्तम्मि जं फलं भणिअं । गमणे पुण दसमकयं होइ फलं तस्स नियमेण ॥ ५ ॥
वच्चंतस्स य जायइ पुरिसस्स दुवालसम्मि तवकम्मे । पक्खोववासफलं पुण मज्झपएसे ठिओ लहइ ॥ ६ ॥
दिट्ठे जिणंदभवणे वरिसोवासस्स जं फलं होइ । वरिससओवासफलं जिणभवणपयाहिणे लहइ ॥ ७ ॥
वरिससहस्सोवासम्मि जं फलं तं जिणंददिट्ठम्मि । जिणवन्दणं कुणन्तो अणन्तपुन्नं जिओ लहइ ॥ ८ ॥

तथा लक्ष्मीं विस्तारयति; नीरोगतां मरकाद्युपद्रववर्जां तनोति; वैराग्यं निष्पादयति; प्रीतिं भूपालादिसत्कारमान्यतां चटत्प्रकर्षां पल्लवयति; यशः प्रसूते । किं बहुना? स्वर्गं मोक्षं च ददाति ।

॥ इत्यर्चोपदेशः २८ ॥



यान्ति दुष्टदुरितानि दूरतः कुर्वते सपदि संपदः पदम् ।
भूषयन्ति भुवनानि कीर्तयः पूजया विहितया जगद्गुरोः ॥ १ ॥

जिनपूजयाऽष्टोत्तरशतस्नात्ररूपया दुरितानि दूरे गच्छन्ति; तीर्थंकरादिसंपदस्तं स्थानकं कुर्वन्ति ।

यदुक्तम्--जिणपूअणेण पुज्जो होइ सुगन्धो सुगन्धधूवेण । दीवेण दित्तिमन्तो अक्खइओ अक्खएहिं तु ॥२॥
ह्ववणेण निम्मलत्तं इंदत्तं लहइ थुइपयाणेण । गणहरतित्थयरत्तं जिणस्स घयपगरणे कुणइ ॥ ३ ॥

तथा त्रैलोक्यशोभाकारिणी कीर्तिः स्यात् । दृष्टान्तो यथा--वाराणस्यां देपालाभिधो व्यवहारी लक्ष्म्याश्चञ्चलत्वं विचिन्त्य जिनभवनबिम्बेत्यादिषु सप्तक्षेत्रेषु स्वलक्ष्मीं व्ययति स्म । स्वकारितप्रासादे पूजानृत्तादि प्रत्यहं करोति, कारयति स्म च । क्रमेण क्षीणविभवोऽभूत् । पुरातनमहत्त्वेन द्रव्यव्ययो महान् भवति स्म । तेन प्रत्यन्तग्रामे गतः । तत्र कृषिकर्मादिना कष्टेन निर्वाहं करोति स्म; निर्द्धनत्वेन स्वप्रासादे पूजादिकं किमपि न कारयति स्म । प्रतिमाऽधिष्ठायकदेवेनाऽचिन्ति । पूजादि कुतो न भवति ?। अवधिज्ञानेन श्रेष्ठिनः स्वरूपमवगतम् । तत्प्रतिबोधनोपकारकरणार्थं दूरदेशान्तरस्थभागिनेयरूपं कृत्वा तद्गृहं गतः । मातुलान्या जोत्कारः कृतः । पृष्टम्--मातुलः क्वास्ति ?। तयोक्तम्--क्षेत्रे । तन्मिलनाय यावदागच्छति तावता तया शीताशनायोपवेशितः । युगन्धरीघृष्टितक्रादि यावत् परिवेषयति तावता तेनोक्तम्--एतत् शिक्यकस्थपूपिकाचूर्णं परिवेषय । एवमुक्ते तया तत्परिवेषितम् । पुनः कथयति स्म--अत्रस्थं करम्बं परिवेषय । सोऽपि परिवेषितः । तदनु मातुलमिलनाय क्षेत्रं गतः । मातुलस्य प्रणामः । आजीविकास्वरूपं पृष्टम् । तेन सर्वमुक्तम् । मध्याह्ने मातुलस्योक्तम्--भोजनाय गृहे

गम्यते ?। एताः साण्ठिका यदि कर्तिता भविष्यन्ति तदा गृहे गंस्यते । तत्कथनात्तेन सर्वाः कर्तिताः । भारो बद्धः। तं लात्वा यावता गृहं प्रति समागच्छतः, तावन्मातुलान्याऽन्याऽऽसक्तया तज्जेमनाय पुनर्विशेषभोजनसामग्री विहिता । भोजनाय यावज्जारमुपवेशयाति तावत्तौ गृहद्वारे प्राप्तौ । तया जारः पशुकुट्यां गोपितः । तदुपरि तृणानि क्षिप्तानि । भागिनेयेन साण्ठिकाभारस्तदुपरि क्षिप्तः। तया तयोः स्नानादि कारितम्। मातुलो यावता भोजनायोपविशति, तावता भागिनेयेन देवपूजादिविषये कुतोऽलसस्त्वमित्युक्तम् ?। आजीविकादौष्कर्येण सर्वं विस्मृतमित्युत्तरं मातुलेन दत्तम्। भागिनेयेन जिनार्चा विना भोजनकरणनियमोऽदायि। ततो भोजनायोपविष्टौ। यदा सा नीरसं परिवेषयति स्म; तदा नन्दापुत्रेणोक्तम्-लपनश्रियं परिवेषय; कूरदाल्यौ च। तया सर्वं परिवेषितम् । भोजनादनु मातुल ! चतुष्पथे गम्यते। मातुलो वक्ति स्म--साण्ठिकाभ्यः कणान् लास्यामि । भागिनेयस्तु मुशलमादाय मध्यस्थितजारां साण्ठिकां कुट्टयित्वा कणान् पातयामास । मातुलान्या उक्तम्--त्वया कणा ग्राह्या इति । तदनु तौ बहिर्निर्गतौ। तं निष्कास्य शरीरे शंखचूर्णादि दत्त्वा तद्गृहं प्रेषितः। प्रतिदिनलक्ष्मीप्रवर्द्धनात्पूजामाहात्म्यदर्शनाद् जिनपूजायां निधानप्राप्त्या तेन श्रेष्ठी दृढीकृतः; संपत्त्याऽऽत्मजविवाहः कारितो महोत्सवेन । मण्डपनिवृत्तिदिवसे सर्वस्वजनवर्गो ग्रामलोकश्च भोजनाय निमन्त्रितो मातुलान्या जारोऽपि च। भोजनावसरे

पुरुषाणां गौरवं मातुलः करोति; स्त्रीणां गौरवं भागिनेयश्च । स जारः स्त्रीरूपेण पङ्क्तिप्रान्ते उपविष्टः । पङ्क्त्यां परिवेषयन् यदा तदग्रे समायाति तदैवं कथयति स्म--साण्ठिकामध्ये त्वमासीः ? स कथयति स्म--नाहं नाहम् । भागिनेयो लोकान् पर्यवसापयति स्म । एषा कथयति स्म-नाहमेतद् ग्रहीष्यामीतिकथनेन मोदकादिषु एवमेव निर्वोलितम् । करम्बपरिवेषणे पङ्क्तेस्तस्यापि न परिवेषितम् । तया तत्स्वरूपं ज्ञात्वा द्वादशमोदका अदीयन्त । कञ्चुककक्षादिमध्ये गोपितास्ते । ततः सर्वाः स्त्रियो यावत्स्वगृहं प्रति गच्छन्ति स्म तावता भागिनेयेनोक्तम्--मम मातुलस्य मण्डपवद्धापनं कुर्वन्तु । सर्वाः स्त्रियः कुर्वन्ति स्म, यदा तस्य स्त्रीरूपधारिणो वारकः समागतः, तदा बद्धहस्त इव स वर्द्धापयति स्म । स वदति स्म । बद्धाभ्यां हस्ताभ्यां कस्माद्वर्द्धापयसीति कथयित्वा बलात्कारेण तद्बाहू प्रसारितौ । तदा मोदकाः पेतुः । तदनु मातुलान्याः स्वरूपं सर्वं स्फुटमजनि लोकानां, मातुलस्य च । मातुलं प्रतिबोध्य देवः स्वस्थानं प्राप्तः । श्रेष्ठी दीक्षां लात्वा तपस्तप्त्वा च स्वकार्यमसाधयत् ॥इति जिनार्चोपदेशः २९॥

---

श्रीमज्जिनेन्द्रपदपङ्कजपूजनेन ज्ञानक्रियाकलितसद्गुरुसेवनेन ।
स्वाध्यायसंयमतपोविनयादिना च कस्याऽपि पुण्यपुरुषस्य दिनानि यान्ति ॥ १ ॥

अपिच--

मौलिं स्वं च जिनेश्वरस्य नमनात् कर्णौ गुणाऽऽकर्णनाद् नेत्रे रूपनिरूपणेन रसना स्तोत्रक्रमोपक्रमैः ।
पाणी पूजनकर्मकर्मठतया चैत्याऽऽगमेन क्रमौ चित्तं संस्मरणाद् करोति विमलं कश्चिद्विपश्चिन्नरः ॥ २ ॥

जिनपूजाऽभावे तु निष्फलं सर्वम् । यतः--

यैस्त्वं नाथ ! न वन्दितो न च जिनः संपूजितः पूजनैः सद्भक्त्या न च संस्तुतस्तव गुणग्रामोऽभिरामः सदा ।
न ध्यातः परमेश्वरः शिवगतः सुध्यानयोगैर्नहि तैर्नूनं विफलीकृतो निजभवोऽरण्ये यथा मालती ॥ ३ ॥
पूजा नैव कृता जिनस्य कमलैः किञ्जल्कगन्धोत्कटैर्दानं नैव चतुर्विधं मुनिजने दत्तं मया भक्तितः ।
तप्तं नैव तपः सुचारु चरितं रत्नत्रयाराधकम्; हा! कष्टं जननी मया प्रसवने दुःखेन संयोजिता ॥ ४ ॥

धन्यस्तु स एव यस्य धनं निजपूजायां लगति । यतः--

ज्वलनजलचौरचारणनृपखलदायादबन्दिकोद्वृत्तम् । धन्योऽसौ यस्य धनं जिनपूजायां मुदा लग्नम् ॥५॥
जैनेन्द्रार्चनवेश्मबिम्बमहिमायात्राऽभिषेकादिषु ब्रह्माऽऽसेवनतत्परेषु यतिषु ज्येष्ठार्यगुर्वादिषु ।
श्रीसङ्घे च यथाविधि प्रतिदिनं यद् द्रव्यमेति व्ययं नृणां सौख्यकरं तदेव वहते क्लेशाय शेषं पुनः ॥ ६ ॥

दृष्टान्तो यथा--गजपुरे श्रीधरो वणिक् साधुपार्श्वे जिनार्चाफलमश्रृणोत् ।

यथा——इह लोए दुरिआइं दूरे गच्छंति हुंति रिद्धीओ । विप्फुरइ वरा कित्ती जिणपूआए पहावेण ॥ ७ ॥

परलोए देवासुरिंदत्तं चक्कवट्टिरिद्धी अ । मोक्खोवि धुवं पावइ जिणपूआए रओ जीवो ॥ ८ ॥

इत्युपदेशं श्रुत्वा कारयित्वा जिनप्रतिमां त्रिसन्ध्यं पूजयामास । एकदा धूपोत्क्षेपपरो मया निष्ठिते धूपे नेतः स्थानाद्गन्तव्यमित्यभिग्रहमग्रहीत् । तावता सर्पः समागात् । दुष्टाहिं दृष्ट्वाऽपि निश्चलस्तस्थौ । रोषात्सर्पो यावता दशति शासनदेवतया तावताऽहिर्दूरमुच्छाल्य क्षिप्तः; लक्ष्मीवृद्धिकरं रत्नं समर्प्य तिरोभूता । रत्नानुभावात्कोटीध्वजः समभूत् । एकदा कामरूयक्षे पूजिते सर्वेष्टप्राप्तिरिति लोकवचः श्रुत्वा लोभाद् यक्षमर्चयामास । एवं लोकोक्तितश्चण्डीगणेशं चाप्यपूजयत् । अन्यदा गृहसर्वस्वं चौरधाट्या मुषितम् । आजीविकाऽपि दुःखेनाभूत् । उपवासत्रयेण कुलदेवी समाराधिता । प्रत्यक्षा सा कथयति स्म--गणेशाद्यास्तव लक्ष्मीं दास्यन्ति, ये त्वया मामुपेक्ष्य भक्त्या; पूजिताः; सन्ति तेऽप्याराधिताः । अस्माभिः किमपि न चलतीत्युक्त्वा गता । ततः शासनदेवी आराधिता । तया जिनार्चाविषये यावज्जीवं दृढीकृतः । तुष्टया रत्नकोटी अनेकशः प्रदत्ता । ततस्त्रिसन्ध्यं जिनार्चां कुर्वन् श्रीधरः स्वर्गभाक् समभूत् ॥ इति जिनार्चोपदेशः ३० ॥

वरपूजया जिनानां धर्मश्रवणेन सुगुरुसेवनया । शासनभासनयोगैः सृजन्ति सफलं निजं जन्म ॥ १ ॥

जिनपूजाऽभावे राज्याद्यपि निष्फलम् । यतः—

किं राज्येन धनेन धान्यनिचयैर्देहस्य सद्भूषणैः पाण्डित्येन भुजाबलेन महता वाचां पटुत्वेन च ।
जात्याऽप्युत्तमया कुलेन शुचिना शुभ्रैर्गुणानां गणैः येऽर्हच्चैत्यपवित्रबिम्बकरणे तत्पूजने वाऽक्षमाः ? ॥२॥

जिनार्चैकाग्रमनसा विधेया । यतः—

क्रोधमानविनिर्मुक्तो रागद्वेषविवर्जितः । एकाग्रमनसो भूत्वा जिनेन्द्रमभिपूजयेत् ॥ ३ ॥

तथा धर्मश्रवणं महालाभाय । यतः—

सुच्चा जाणइ कल्लाणं सुच्चा जाणइ पावगं । उभयंपि जाणइ सुच्चा जं सेयं तं समायरे ॥ ४ ॥

धर्मः श्रुतोऽपि दृष्टोऽपि कृतो वा कारितोऽपि वा । अनुमोदितो राजेन्द्र ! पुनात्यासप्तमं कुलम् ॥ ५ ॥

धर्मश्रवणमपि सुगुरुसेवया स्यात् । यतः—

विना गुरुभ्यो गुणनीरधिभ्यो जानाति धर्मं न विचक्षणोऽपि ।
यथाऽर्थसार्थं गुरुलोचनोऽपि दीपं विना पश्यति नान्धकारे ॥ ६ ॥

लोहविवज्जिअ सिहरहिय नीरंजण निन्नेह । जीवह रक्खणकारणं गुरुदीवो नव एह ॥७॥

नरयगइगमणपडिहत्थए कए तह पएसिणा रण्णा । अमरविमाणं पत्तं तं आयरियप्पभावेण ॥ ८ ॥

केशिगणधरप्रदेशिनृपकथानकम् ।

अज्ञानतिमिरान्धानां ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ९ ॥

तथा गोपगिरौ, आमनृपो गीतगानार्थाऽऽगतमातङ्गीरूपमोहितो तत्संसर्गोत्सुकेन नगराद्बहिर्नव्यकारितावासे गच्छन्—

स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । संपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥ १० ॥

भारपट्टबप्पभट्टिसूरिलिखितसुभाषितं दृष्ट्वा शङ्कितः । तदुपरि—

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णो दूरे शोभा वपुषि निहिता पङ्कशङ्कां करोति ।
यद्यप्येवं सकलसुरभिद्रव्यगन्धापहारी नो जानीमः परिलमगुणः कस्तु कस्तूरिकायाः ? ॥ ११ ॥

बालादपि हितं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १२ ॥

वृत्तद्वयं लिखित्वा पश्चाद्वलितः पुनरपि तत्संगोत्सुकस्तत्र गच्छन् सूरिभिः—

शैत्यं नाम गुणस्तवैव भवतः स्वाभाविकी स्वच्छता
किं ब्रूमः ? शुचितां व्रजन्त्यशुचयः सङ्गेन यस्याऽपरे ।
किञ्चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः ! कस्त्वां निरोद्धुं क्षमः ? ॥ १३ ॥

इत्यादितद्द्वारपट्टलिखितवृत्तैः प्रतिबोधितः परस्त्रीसहोदरव्रतमग्रहीद् यावज्जीवम् , तदभिलाषोत्थपातकाऽऽलोचनतत्प्रायश्चित्तप्रासादकारणपूर्वमिति; आमबप्पभट्टिप्रबन्धो गुरुभक्तौ ॥ तथा—

सो हेमसूरिगुरुणा सुवयणपडिबोहिओ कुमारपालो । जेणेगससयमारणकज्जे पज्जालिओ गंजो ॥१४॥
तो जाउ कुमारनिवो सुणिऊण जिणागमं परमसड्ढो । मंकोडरक्खणत्थं नियजंघा कत्तिआ जेण ॥१५॥

श्रीहेमाचार्यकुमारनृपप्रबन्धो वाच्यः । तथा जिनशासनभासनं नाट्यवादित्रसङ्घार्चायात्रागुरुप्रवेशोत्सवैः कार्यम् ॥ इति जिनार्चोपदेशः २१ ॥

जिनबिम्बार्चनं सेवा गुरूणां प्राणिनां दया । शमो दानं तपः शीलमेष धर्मो जिनोदितः ॥ १ ॥





जिनप्रणीतधर्माराधनसावधानैर्मानुषं जन्म सफलीकार्यम् । यदुक्तम्--

जिनेन्द्रपूजा गुरुपर्युपास्तिः सत्त्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य नृजन्मवृक्षस्य फलान्यमूनि ॥ २ ॥

तत्र जिनपूजा--विपुलमञ्जुलमङ्गलकारणं दुरितसंततितापनिवारणम् ।
जनितविश्वमनोरथपूरणं कुरुत भव्यजनाः ! जिनपूजनम् ॥ ३ ॥

जिनेन्द्रपूजनध्यानमपि स्वर्गापवर्गदम् । स्थविराया इव भवेद् भव्यानां भावयोगतः ॥ ४ ॥
तथाहि--श्रीकाकन्द्यामभूत्पुर्यां जितारिरवनीश्वरः । दरिद्रोपद्रुता तत्र स्थविरैका वराकिका ॥ ५ ॥
अन्यदा समवासार्षीत् श्रीवीरो जिननायकः । राजा प्रजायुतो नन्तुं ययौ सर्वर्द्धिवर्द्धितः ॥ ६ ॥
तस्मिन्नवसरे वृद्धा गृहीत्वा काष्ठभारकम् । वलमाना जिनं दृष्टवती राजादिपूजितम् ॥ ७ ॥
हर्षप्रकर्षतश्चित्ते चिन्तयामास विस्मिता । अयमेव देवो विश्वे सुराऽसुरनमस्कृतः ॥ ८ ॥
मया प्राच्यभवे नाऽयं पूजितो जगदीश्वरः । तेनाहं दुःखसंभारमग्नाऽभवमिह ध्रुवम् ॥ ९ ॥
पूजयाम्यधुना पूज्यं पूज्यैरपि निरन्तरम् । येनागामिभवो मे स्यात् सौख्याऽभ्युदयसुन्दरः ॥ १० ॥

चिन्तयित्वेति सा मुक्तकाष्ठभारा त्वरातुरा । सिन्दुवारादिपुष्पाणि लात्वाऽगाज्जिनमर्चितुम् ॥ ११ ॥
नेत्रहीनतया शङ्कोः स्खलितांह्रिर्विपद्य सा । महर्द्धिर्दिवि देवोऽभूत् पूजाध्यानप्रभावतः ॥ १२ ॥
ज्ञानेनावधिना ज्ञात्वा स्वस्य देवत्वकारणम् । जिनार्चाध्यानमप्यागात् वीरं नन्तुमयं सुरः ॥ १३ ॥
अत्राऽन्तरे समायासीज्जितारिः पृथिवीपतिः । प्रभुं नत्वोपदेशान्तेऽपृच्छद्विनयवामनः ॥ १४ ॥
हेतुना केन देवोऽयमतीव द्युतिमान् विभो ! । स्वाम्युवाच त्वया दृष्टा या मृता स्थविरा बहिः ॥ १५ ॥
तज्जीवोऽयमभूद्देवोऽस्मत्पूजाध्यानयोगतः । यथाऽल्पेनापि कालेन क्षीणकर्मैव सेत्स्यति ॥ १६ ॥

इति जिनार्चोपदेशः ३२ ॥

---

जिनभवनं जिनबिम्बं जिनपूजां जिनमतं च यः कुर्यात् । तस्य नरामरशिवसुखफलानि करपल्लवस्थानि ॥१॥

जिनभवनं यः कारयति स स्वर्गभाक् स्यात् ।

यतः--काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावन्ति वर्षलक्षाणि तत्कर्ता स्वर्गभाग् भवेत् ॥ २ ॥

परमाणुस्वरूपम् । यथा--

जालान्तरगते सूर्ये यत्सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः परमाणुः स उच्यते ॥ ३ ॥

जीर्णोद्धारे त्वष्टगुणं पुण्यम् । यतः—

नूतनार्हद्वरावासविधाने यत्फलं भवेत् । तस्मादष्टगुणं पुण्यं जीर्णोद्धारे विवेकिनाम् ॥ ४ ॥

दृष्टान्ताः ३६सहस्रप्रासादकारकश्रीसंप्रति-१४४४प्रासादकारकश्रीकुमारपाल-पञ्चसहस्रप्रासादकारकश्रीवस्तुपाल-श्रीशत्रुञ्जयभृगुकच्छोद्धारकारकमं०उदयनाङ्गजबाहडदे- ८४प्रासादकारकसं०पेथड-झांझण-रैवतोद्धारपरसज्जन-दण्डनायकादीनां स्वयं वाच्याः । तथा जिनबिम्बकारकाणां दुर्योन्यादिकं न स्यात् ।

यतः—जिनार्चाकारकाणां न कुजन्म कुगतिर्न च । न दारिद्र्यं न दौर्भाग्यं न चान्यदपि कुत्सितम् ॥५॥

दृष्टान्ताः—कयजिणपडिमुद्धारा पंडवा जत्थ वीसकोडिजुआ । मुत्तिनिलयम्मि पत्ता तं सत्तुंजयमहातित्थं ॥६॥

तथा श्रे० जावड-सपादकोटिबिम्बकारकश्रीसंप्रति—सपादलक्षार्चापरश्रीवस्तुपाल—७२चतुर्विंशतिपट्टकारक-मुंजिगपुरीयसं० सूंटादीनां वाच्याः । तथा जिनपूजां जिनधर्मं यः करोति तस्य नरसुखं चक्रवर्त्तिवासुदेव-तीर्थकृत्पदवीप्रमुखम्, इन्द्राऽहमेन्द्रादिपदवीप्रमुखमोक्षसौख्यानि हस्तगतान्येव भवन्ति ॥

इति जिनार्चोपदेशः ३२ ॥

पूआ पंच्चक्खाण पडिक्कमणं पोसहो परुवयारो । पञ्च पयारा जस्स उ न पयारो तस्स संसारे ॥ १ ॥

यः पञ्च पकारानाराधयति तस्य संसारे प्रचारो न स्यात् । तत्र पूजा त्रिसन्ध्यं कार्या ।

दृष्टान्तः--ज्ञात्वा श्रीजैनधर्मस्य प्रभावं तु प्रभावती । समं श्रीउदयनेन त्रिसन्ध्यं देवमार्चयत् ॥ २ ॥

पच्चक्खाणं कपर्दिवत्कार्यम् । यतः--

यः पूर्वं तन्तुवायः सुकृतकृतलवैर्दूरितः पूरितोऽघैः प्रत्याख्यानप्रभावादमरमृगदृशामातिथेयं प्रपेदे ।
सेवाहेवाकशाली प्रथमजिनपदाम्भोजयोस्तीर्थरक्षादक्षः श्रीयक्षराजः स भवतु भवतां विघ्नमर्दी कपर्दी ॥३॥

पडिक्कमणमपि दिनलग्नपापाऽपहं स्यात् । यदुक्तम्——

का चीवराण पवरा किं दुल्लहं मरुअदेसमज्झम्मि । किं पवणाओ चवलं दिवसकयं किं हरइ पावं ? ॥४॥ पडि-क्क-मणं ।

आरंभस्स निवारणं सुहमणोवित्तीइ जं कारणं अक्खारीण निरोहणं दिणनिसापाच्छित्तसंसोहणं ।
कम्माणं मुसुमूरणं तवसिरीभंडारसंपूरणं तं धन्ना भवनासणं अणुदिणं सेवंति आवस्सयं ॥ ५ ॥

तदपि पदसम्पदाद्यवहितहृदयेन मौनमुद्रया कार्यम् । यतः——

पडिलेहपूअभोअणविआरभूमीपडिक्कमणकाले । मग्गे गच्छंतेणं मुणिणा मोणं विहेयव्वं ॥ ६ ॥

दृष्टान्तौ यथा--ढिल्ल्यां सा० साजणसिंहो द्विसंध्यं कालवेलाप्रतिक्रमणं विना न भुङ्क्ते स्म। एकदा पीरोजपातसाहिना बन्दी कृतः, ततस्तेन तत्रस्थेनाऽऽरक्षकाणां पञ्चाशद्धाटकान् दत्त्वा ५० प्रतिक्रमणानि कृतानि। भाग्यात्तुष्टसुरत्राणेन परिधाप्य मुक्तः, वादित्रादिप्रवेशोत्सवं गृहं प्राप्तः। ततो भीतारक्षकैर्वर्धापनमिषेण ५० हाटकाः प्राभृतीकृताः। तदा पञ्चाशत्सहस्रनिष्कानपि युष्मन्मार्गितानर्पयित्वा मयाऽमूल्यं प्रतिक्रमणं कर्त्तव्यमेवेत्युक्त्वा बहुमानदानपूर्वं पश्चादर्पिताः। पर्वतिथिषु पोषधो ग्राह्यः। यथा--सागरचन्दो कामो चन्द० ॥७॥ धन्ना सलाहणिज्जा० ॥८॥ सामाइयपोसह० ॥९॥

पञ्चमः--श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः। परोपकारः पुण्याय पापाय परपीडनम् ॥ १० ॥

क्षेत्रं रक्षति चञ्चा सौधं लोलत्पटी कणान् रक्षा। दन्तात्ततृणं प्राणान्नरेण किं निरुपकारेण ? ॥ ११ ॥

तीर्थङ्करैर्विश्वं सांवत्सरिकदानेनाऽनृणं क्रियते। मुनिसुव्रतस्वामी प्रतिष्ठानपुरादेकरात्रौ विहृत्य षष्टियोजनीं भृगुकच्छेऽश्वप्रतिबोधरक्षार्थमागतः। श्रीमहावीरेण चम्पातो विहृत्य क्षुत्तृट्मूत्रनिरोधकष्टोपसर्गसहनात् मार्गे मुक्तिप्राप्त्याराधकानां १५शतसाधूनां मरणमुपेक्ष्य वीतभयपत्तने चरमराजर्षिः श्रीउदायनो दीक्षितः। केवलाप्त्या तारितः॥ इति जिनार्चोपदेशः ३४ ॥

उपसर्गाः क्षयं यान्ति छिद्यन्ते विघ्नवल्लयः । मनः प्रसन्नतामेति पूज्यमाने जिनेश्वरे ॥ १ ॥

जिने पूज्यमाने देवमानवदानवोद्भवा उपद्रवाः क्षयं गच्छन्ति । यथा—पूर्वभवक्रुद्धद्वैपायनासुरेण द्वारिकाभङ्गश्चिकीर्षितोऽपि पौरक्रियमाणस्थानस्थानजिनपूजास्नात्राऽऽचाम्लाऽमारिप्रवर्त्तनादिपुण्यैर्द्वादशवर्षावधि नाऽजनि, लोकानां पुण्यशिथिलीभवनात्तदनु समभूत् । श्रीशान्तिजिने गर्भस्थे अचिराराज्ञीस्नानवारिच्छटाभिर्मरकोपद्रवशान्तिर्जाता । सांप्रतकालेऽपि विधिनाऽष्टोत्तरशतस्नात्रेण भूतप्रेतशाकिनीग्रन्थिविकाराः क्षयं यान्ति । तथा विघ्नवल्लयो लाभान्तरायचौरधाटीलुण्टाककटकभीतिप्रभृतयः प्रदीपादिपुण्यात् क्षयं गच्छन्ति । तथा चपलं मनः शुभध्यानेनाऽऽधिदौर्मनस्योच्चाटाद्यभावेन सुप्रसन्नं भवति ॥ इति जिनार्चोपदेशः ३५ ॥

---

पूजाकोटिसमं स्तोत्रं स्तोत्रकोटिसमो जपः । जपकोटिसमं ध्यानं ध्यानकोटिसमो लयः ॥ १ ॥

कोटिवारजिनपूजाभिर्यत्पुण्यं तत्स्तोत्रेण जिनगुणवर्णनस्तवस्तुतिरासभासगीतगानादिना स्यात् । तथा स्तवनकोटिसमानो जिननामनमस्कारस्मरणादिरूपो जपः ।

यट्टङ्को दृषदो यदुष्णकिरणो ध्वान्तस्य यच्छीतगुः पद्मानां च हिमं वनस्य च दशाकर्षः पतङ्गस्य च ।

अद्रेर्यत्कुलिशः प्रचण्डपवनो मेघस्य यद् यत्तरोः पर्शुर्यत्करिणो हरिर्वितनुते तत्कर्मणां सज्जपः ॥ २ ॥

जपकोटिपुण्यसमानं निरक्षरं ध्यानम् । यतः—

प्रणिहन्ति क्षणार्धेन साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ ३ ॥

ध्यानकोटिसमो लयश्चेतसो मोहमानमदमायागृहकार्यचिन्तनवर्जनादिना एकाग्रसंस्थापनं लयः । परं सर्वत्र भाव एव विलोक्यते । यतः—

मन्त्रे देवे गुरौ तीर्थे दैवज्ञे स्वप्नभेषजे । यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ४ ॥

दृष्टान्तो यथा—कुसुमपुरे धनसारश्रेष्ठी त्रिकालजिनार्चादिपुण्यप्रवणः परिवसति स्म । तेन स्वन्यायार्जितधनेन जिनप्रासादः कारितः । सुतानां न रोचते स्म । अभाग्यवशाद् निर्द्धनो जातः । पुत्राः कथयन्ति स्म—पुण्यं कृतं तेन धनं गतम् । तथापि स्तोकं स्तोकं करोत्येव । एकदा गुरुभिः पृष्टम्—अस्ति सुखम् ? तेनोक्तम्—संतोषसुखमस्ति । परं धर्मापभ्राजनाऽस्ति जनमध्ये । गुरुभिः पार्श्वमन्त्रो मन्त्राधिराजाभिधः समर्पितः । तेन स्वप्रासादे स्वमूलनायकबिम्बाग्रे शतपत्रपुष्पमालापूजापूर्वं जप्तः । संतुष्टः श्रीधरणेन्द्रः । प्रोक्तम्—मार्गयाऽभीष्टम् । तेनोक्तम्—यावत्पुष्पमालापूजया पुण्यमर्जितं तावन्मात्रं द्युम्नं समर्पय । धरणेन्द्रेणोक्तम्—तावत्पुण्यानुरूपं फलं चतुःषष्टिसुरेन्द्रा अपि दातुं न

क्षमाः; तथा केवलिनोऽपि वक्तु न क्षमाः । यदुक्तम्--

आयुष्कं यदि सागरोपममितं व्याधिव्यथावर्जितं पाण्डित्यं च समस्तवस्तुविषयं प्रावीण्यलब्धास्पदम् ।
जिह्वा कोटिमिता च पाटवयुता स्यान्मे धरित्रीतले नो शक्नोमि तथापि वर्णितुमलं तीर्थेशपूजाफलम्॥५॥

श्रेष्ठिनोक्तम्--तर्हि पुष्पस्यैकस्यार्पय। तत्फलमर्पयितुमसमर्थः। तत्पत्रस्यार्पय। तत्राप्यसमर्थः। तर्हि गच्छ स्वस्थाने। अमोघा वासरे विद्युत् अमोघं देवदर्शनमित्युक्त्वा तव गृहे चतुष्कोणेषु रत्नभृतस्वर्णकलसान् स्थापयन्नस्मीत्युक्त्वा तिरोभूतः । पुत्राणां पुण्यफलं दर्शयित्वा, धर्मे स्थिरीकृत्य कुटुम्बम्, तद्धनेन यावज्जीवं सुखी भोगी जातः त्रिजिनार्चापरायणः ॥ इति जिनार्चोपदेशः ३६॥



संसाराम्भोधिबेडा शिवपुरपदवी दुर्गदारिद्र्यभूभृद्भङ्गे दम्भोलिभूता सुरनरविभवप्राप्तिकल्पद्रुकल्पा ।
दुःखाग्नेरम्बुधारा सकलसुखकरी रूपसौभाग्यभर्त्री पूजा तीर्थेश्वराणां भवतु भवभृतां सर्वकल्याणकर्त्री ॥१॥

श्रीजिनेन्द्रपूजा भुक्तिमुक्तिदा सर्वदा सेव्या । इह परलोके सुखमिच्छता येन च जिनो न पूजितः स दुःखी स्यात् । यतः——

महाव्याधिग्रस्तः शिटितवसनो दीनवदनो बुभुक्षाक्षामात्मा परगृहशतप्रेक्षणपरः ।
स दुःखार्त्तो लोके भ्रमति हि भवे येन कुधिया न सद्भक्त्या ध्यातो ननु जिनपतिश्चिन्तितफलः ॥२॥

दशपुरे वज्रकर्णो राजा पारधिपरः क्वापि वनेऽन्यदा साधुना भणितः । यथा—

हंतूण परप्पाणे अप्पाणं जो करेइ सप्पाणं । अप्पाणं दिवसाणं कए विनासेइ अप्पाणं ॥ ३ ॥

स च प्रतिबुद्धः प्राह—भगवन् ! कथं मे कर्ममोक्षः ?। साधुराह—

जइ न कुणसि तवचरणं न पढसि न कुणसि देसि नो दाणं । ता इत्तियं न सक्कसि जं देवो इक्क अरिहंतो॥४॥

स चाह—जिनं विना नान्यस्य नमस्कारो मया कार्यः । स मुद्रिकासंस्थं जिनं नमन् स्वस्वामिनं सिंहोदरं नाऽनमत्। तस्योपरि कुपितः सिंहोदरः ससैन्यो दशपुरं वेष्टयित्वा स्थितः। रामलक्ष्मणाभ्यां साधर्मिकभक्त्या युद्धं विधाय बद्धः सिंहोदरः वज्रकर्णेन सह मैत्रीं प्रापितः । वज्रकर्णं स्तुवन्ति स्म । यथा—

अहो ! सात्त्विकमूर्धन्यो वज्रकर्णो महीपतिः । सर्वनाशेऽपि योऽन्यस्मै ननाम न जिनं विना ॥ ५ ॥

वज्रकर्णकथा रामायणोक्ता वाच्या ॥ इति जिनार्चोपदेशः ३७॥

ये देवं स्नपयन्ति शाम्यतितमां तेषां रजः कर्मणां ये नाथं परिपूजयन्ति जगतः पूज्या भवन्त्येव ते ।
मङ्गल्यानि जिनस्य ये विदधते तद्विघ्ननाशो भवेत् पादाब्जे प्रणमन्ति ये भगवतस्ते वन्दनीयाः सताम्॥१॥

सर्वमलरहितस्य परमेश्वरस्य स्नात्रं स्वकर्ममलक्षालनाद्यर्थम् । यतः—

न स्तुतिस्त्वयि न चापि निन्दनं नाथ ! संलगति केवलात्मनि ।
कर्तुरेव लगतीश ! केवलं वज्रभित्तिनिहितेव गोलिका ॥ २ ॥

एवमारात्रिकेण स्वार्त्तिनाशः । मङ्गलप्रदीपेन स्वमङ्गल्यम् । यतः—

बहुवर्त्तिसमायुक्तं ज्वलन्तं श्रीजिनाग्रतः । कुर्यादारात्रिकं यस्तु कल्पकोटि दिवं वसेत् ॥ ३ ॥
कर्पूरेण तु यः कुर्याद्भक्त्या श्रीजिनमूर्धनि । आरात्रिकं दीप्रदीपं लभते मोक्षमव्ययम् ॥४॥
प्रज्वाल्य देवदेवस्य कर्पूरेण प्रदीपकम् । धर्मराज्यमवाप्नोति स्वकुलं च समुद्धरेत् ॥ ५ ॥
धूपो दहति पापानि दीपो मृत्युविनाशकः । नैवेद्ये विपुलं राज्यं प्रदक्षिणा शिवप्रदा ॥ ६ ॥

तत्रावसरे सर्वशक्त्या दानं देयम् । यथा—

द्वात्रिंशद् द्रम्मलक्षा भृगुपुरवसतौ सुव्रतस्यार्हतोऽग्रे कुर्वन् मङ्गल्यदीपं ससुरनरवरश्रेणिभिः स्तूयमानः ।

योऽदादर्थिव्रजस्य त्रिजगदधिपतेः सद्गुणोत्कीर्त्तनायां स श्रीमानाम्रदेवो जगति विजयते दानवीराग्रयायी ॥७॥

॥ इति जिनार्चोपदेशः ३८॥

गन्धैश्चारुविलेपनैः सुकुसुमैर्धूपैरखण्डाक्षतैर्दीपैर्भोज्यवरैर्विभूपणगणैर्वस्त्रैर्विचित्रैः फलैः ।
नानावर्णसुवर्णपूर्णकलशैः स्तोत्रैश्च गीतादिभिः पूजां पूज्यपदस्य केऽपि कृतिनः कुर्वन्ति सौख्यावहाम्॥१॥

इत्यादिबहुभेदरचनारम्यां यो देवपूजां रचयति स स्वर्गादिसौख्यानि लभते । किं बहुना? येन केन प्रकारेण पूजा कृता न निष्फला । यदुक्तम्--

असर्वभावेन यदृच्छया वा पराऽनुवृत्त्या विचिकित्सया वा ।
ये त्वां नमस्यन्ति जिनेन्द्रचन्द्र ! तेऽप्यामरीं संपदमाप्नुवन्ति ॥ २ ॥

भावपूजाफलं यथा--

तित्थयरवन्दणत्थं चलिओ भावेण पावए सग्गं । जह दुद्दरदेवेणं पत्तं वेमाणिअसुरत्तं ॥ ३ ॥

मणिकारश्रेष्ठिसेढकविप्रकथा वाच्या ॥ इत्यर्चोपदेशः ३९ ॥

संवच्छरचाउम्मासिएसु अट्ठाहिआसु अ तिहीसु । सव्वायरेण लग्गइ जिणवरपूआतवगुणेसु ॥ १ ॥

पुण्यं सदा पुण्यवता विधेयं विशेषतः पर्वणि वार्षिकाद्ये ।
पूजातपःसंयमदानशीलं पुण्यक्रियाऽऽरम्भपरिच्युतिश्च ॥ २ ॥

लोके यथा मोदकादिभोजनं दीपालिकादौ वस्त्राद्याडम्बरश्च। तथा पर्युषणादौ विशेषतः पुण्यं करणीयम्। यतः—मन्त्राणां परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुञ्जयो दाने प्राणिदया गुणेषु विनयो ब्रह्मव्रतेषु व्रतम् ।
संतोषो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं सर्वज्ञोदितसर्वपर्वसु परं स्याद्वार्षिकं पर्व च ॥ ३ ॥

तथा चातुर्मासकत्रयमाषाढकार्त्तिकफाल्गुनरूपम् । तथाष्टाह्निका चैत्राश्विनपर्युषणाद्या । तथा श्रुततिथयो यथा—

बीया पञ्चमि अट्ठमि एकादसी चउदसी पण तिहीसु । एयाउ सुअतिहीओ गोअमगणहारिणा भणिआ॥४॥

इत्यादिपर्वतिथिषु प्रतिक्रमणपूजादिपुण्यैः शुभकर्मबन्धो भवति । यदुक्तम्——

बीया दुविहे धम्मे पञ्चमि नाणे अ अट्ठमी कम्मे । एगारसि अङ्गाणं चउद्दसी चउदपुव्वाणं ॥ ५ ॥
अष्टमी अष्टकर्मान्ता सिद्धिलाभा चतुर्दशी । पञ्चमी केवलज्ञानं तस्मात्रितयमाचरेत् ॥ ६ ॥

॥ इत्यष्टाह्निकार्चोपदेशः ४० ॥

अष्टाह्निकादिमहिमां जिनपुङ्गवानां कुर्वन्ति ये सुकृतिनः कृतिनः सुभक्त्या ।
कर्माष्टकं जगति ते हि भवाष्टकस्य मध्ये विधूय शिवदं शिवधाम यान्ति ॥ १ ॥

यतः—अष्टाह्निकाप्रबन्धः कर्माऽऽबन्धं धुनोति भव्यानाम् । क्रमभुज्यमानपथ्याहार इव व्याधिसंबन्धम् ॥२॥

सामायिकाऽऽवश्यकपौषधानि देवार्चनस्नानविलेपनानि ।
ब्रह्मक्रियादानदयामुखानि भव्याः ! चतुर्मासकमण्डनानि ॥ ३ ॥

व्याख्यानश्रवणं जिनालयगतिर्नित्यं गुरोर्वन्दनं प्रत्याख्यानविधानमागमगिरां चित्ते चिरं स्थापनम् ।
कल्पाऽऽकर्णनमात्मशक्तितपसा संवत्सराऽऽराधनं श्राद्धैः श्लाघ्यतपोधनादिति फलं लभ्यं चतुर्मासके ॥ ४ ॥

देवार्चनादिविधिना गुरुवन्दनेन सम्यक् तपोभिरसमैः समयाऽऽदृतेन ।
आलोचनाप्रभृतिभिश्च शुभक्रियाभिः संवत्सरप्रभृतिपर्व कृतार्थयन्ति ॥ ५ ॥

॥ इति जिनार्चोपदेशः ४१ ॥



जिणाणं पूअ-जत्ताए साहूणं पज्जुवासणे । आवस्सयम्मि सज्झाए उज्जमेह दिणे दिणे ॥ १ ॥

एतेषु पुण्यकर्त्तव्येषु प्रतिदिनमुद्यमः कार्यः, यथैकदा श्रीहेमसूरिपादैः श्रीकुमारपालस्योपदिष्टम्—

जिणपूआ मुणिसेवा दाणे तवनियमसीलसब्भावे। नाणे दंसणचरणे जइअव्वं दससु ठाणेसु ॥ २ ॥
जिणपूआ मुणिदाणं साहम्मिअपूअणं उचिअदाणं । परियणजणसंभालण पच्चक्खाणस्स संभरणम् ॥ ३ ॥
सुपभाए पढमं सावयस्स पाणं पि न कप्पए पाउं । नो जाव चेइआइं साहू हि वि वंदिआ विहिणा ॥४॥
पत्ते भोअणकाले दाणफल उत्तमं सुणेऊणं । गन्तुं अ उवस्सयम्मि मुणिनाहं वन्दिउं विहिणा ॥ ५ ॥
भत्तिभरनिब्भरङ्गो महया संवेगपुलइअसरीरो । सयमेव य पडिलाभय सुद्धेणं असणपाणेणं ॥ ६ ॥
मज्झन्हे पुण वि वन्दिऊण नियमेण कप्पए भुत्तुं । पुण वन्दिऊण ताइं पउससमयम्मि सो सूइ ॥ ७ ॥

इत्याद्युपदेशः श्रीकुमारपालेन त्रिकालजिनार्चाप्रत्यह१८शतकोटिध्वजव्यवहारिपरिवारमेलापकपूर्वक-नव्यस्वकारितातिहुअणविहारस्नात्रकरणचतुर्दशीपौषधग्राहिसाधर्मिकवात्सल्यकरणपूर्वकभोजनप्रतिवर्षभग्नसाधर्मिकोद्धारार्थकोटिस्वर्णवितरणन्यायघण्टावादनमृतस्वमोचन११लक्षतुरङ्गमवस्त्रपूतपानीयपानसप्तव्यसनानिवारणमुखवस्त्रिकाप्रतिलेखकधार्मिकपञ्चशतवराश्वप्रदानराजपिण्डाऽकल्प्याऽशनाद्याहारसद्भावेऽपि सर्वशक्त्या प्रधानपार्श्वात् सर्वप्रकारसाधुसाध्वीपर्युपास्तिकरणादिपुण्यैः सफलीकृतः ॥ इति जिनार्चोपदेशः ४२ ॥

देवपूजा दया दानं दाक्षिण्यं दमदक्षते । यस्यैते षड् दकाराः स्युः स देवांशी नरः स्मृतः ॥ १ ॥

यथा श्रीविक्रमादित्यः कल्याणमन्दिरावसरे श्रीसिद्धसेनप्रकटीकृतमहाकालालङ्कारश्रीपार्श्वनाथप्रतिमा-त्रिकालपूजापुण्यमकरोत्; तेन चैकदा हस्तिस्कन्धादवतीर्य निच्छारकपतितशालिकणाः शीर्षे दत्ताः, तदा धान्याधिष्ठायिका देवी सन्तुष्टा, ततो दुर्बललोकानुकम्पया मालवके दुर्भिक्षाऽभाववरो मार्गितः; प्रदत्तश्चाऽचन्द्रार्कम्। अद्यापि दुर्भिक्षे दुर्बललोकाधारो मालवकः । तथा च स्वर्णपुरुषसिद्ध्या यावज्जीवार्हद्दानेन पृथिवी अनृणा कृता । स्वसंवत्सरः प्रवर्त्तितः ।

आर्त्ते दर्शनमागते दशशती संभाषणे चायुतं यद्वाचा च हसेऽहमाशु भवता निष्कोऽस्य विश्राण्यताम् ।
निष्काणां परितोषणे मम पुनः कोटिर्मदाज्ञापरा कोशाधीश ! सदेति विक्रमनृपश्चक्रे वदान्यः स्थितिम् ॥२॥

तथा दाक्षिण्यं सर्वेषां हितावहं परार्थसाधकं विप्रादीनां परकायप्रवेशविद्यादीनां दापनम् । दमं उपशमः, शत्रुञ्जयोद्धारादिपुण्यैः संसारविरागः ।

संपइविक्कमबाहडहालपालित्ताऽऽमदत्तरायाई । जं उद्धरिहन्ति विहि तं सत्तुञ्जयमहातित्थं ॥ ३ ॥

दक्षता सर्वावसरसाधनसावधानता । अत्र विक्रमचरित्रं वाच्यम् ॥ इत्यर्चोपदेशः ४२ ॥

पूज्यपूजा दया दानं तीर्थयात्रा जपस्तपः । श्रुतं परोपकारस्य मर्त्यजन्मफलाष्टकम् ॥ १ ॥

मनुष्यजन्मकल्पद्रोः फलाष्टकं ग्राह्यम् । यदुक्तम्—

त्रिसन्ध्यं देवार्चां विरचय चयं प्राप यशसः श्रियः पात्रे वापं जनय नयमार्गं नय मनः ।
स्मरक्रोधाद्यारीन् दलय कलय प्राणिषु दयां जिनोक्तं सिद्धान्तं शृणु वृणु जवान्मुक्तिकमलाम् ॥ २ ॥

पूजाफलं यथा—

कदाचिन्नातङ्कः कुपित इव पश्यत्यभिमुखं विदूरे दारिद्र्यं चकितमिव नश्यत्यनुदिनम् ।
विरक्ता कान्तेव त्यजति कुगतिः सङ्गमुदयो न मुञ्चत्यभ्यर्णं सुहृदिव जिनार्चां रचयतः ॥ ३ ॥

दृष्टान्तो यथा—चन्द्रावतीनगरीशेन श्रीविमलदण्डनायकेन स्वकारितार्बुदाचलमण्डनश्रीविमलवसतिमूलनायक १८भारमितस्वर्णमिश्ररीरीमयसपरिकर ५१अङ्गुलप्रमाणाऽऽदीश्वरस्य प्रत्यहस्नात्रध्वजारोपोत्सवार्थं मुण्डस्थलादि३६०ग्रामेषु प्राग्वाटा वासिताः, सर्वप्रकारकरमोचनाद्यनेकोपकारकरणेन महाधनाढ्याः कृताः, ततः प्रत्यहं स्वचारकक्रमेण मुण्डस्थलादिश्रीसङ्घैः स्नात्रादिपुण्यानि व्यधीयन्त ॥ इत्यर्चोपदेशः ४४ ॥

देवपूजा गुरूपास्तिः स्वाध्यायः संयमस्तपः । दानं चेति गृहस्थानां षट् कर्माणि दिने दिने ॥ १ ॥

यथा गृहाट्टपत्तनव्यवसायकुटुम्बचिन्ताधनार्जनादिकर्माणि गृहिणामैहिकसाधकानि, परं श्राद्धानामिमानि षट् कर्माणि महालाभकराणि नित्यं कर्तव्यान्येव । श्रावकाणां सिद्धान्तेऽयमेव धर्मः कथितः । यतः—

त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य संमाननं स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् ।
शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ २ ॥

मण्डपदुर्गे सं०कुँवरपालेन प्रत्यहाष्टवारं पूजा, प्रतिप्रहरं पृथक्धौतपटनवनवाङ्गीकरणादिना सीतामहासतीकारितश्रीसुपार्श्वप्रतिमाया गोक्षीरस्नात्रकरणपूर्वं यावज्जीवं निद्राविकथादिप्रमादं त्यक्त्वा सर्वशक्त्या कृता ॥

॥ इत्यर्चोपदेशः ४५ ॥

देवं श्रेणिकवत्प्रपूजय गुरुं वन्दस्व गोविन्दवत् दानं शीलतपःप्रसङ्गसुभगां चाभ्यस्य सद्भावनाम् ।
श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा धर्मे कर्मणि कामदेववदहो ! चेतश्चिरं स्थापय ॥ १ ॥

यदि रे आत्मन् ! आगामिभवे सुखमिच्छसि तदैतानि पुण्यानि कुरु । यथा—श्रीश्रेणिकनरेन्द्रवद् वीतरागं

पूजय सद्यस्कसुगन्धकुसुमैः कनकमययवशालिस्वस्तिकाष्टमङ्गलाऽऽलिखनादिप्रकारैः । यतः--

नैवेद्यैः सजलैः शिवाध्वसुखदं स्पष्टं समं शम्बलं धूपेनोर्ध्वगतिः सुगन्धितदिशा वासेन शुभ्रं यशः ।
नृस्वर्गादिफलं फलैश्च कलमैः स्वस्याऽऽढ्यता चाऽक्षतैः पुष्पैर्लोकशिरःस्थितिः शिवतनुर्दीपैर्जिनार्चाफलम् ॥२॥

तथा गुरुं गुणवन्तं कृष्णवद् वन्दय। यथा--श्रीकृष्णेन नेमीश्वरप्रमुखाष्टादशसहस्रसाधवो वन्दनैर्वन्दिताः।
यतः--नीआगोअं खवे कम्मं उच्चागोअं निबंधए । सिढिलं कम्मगंठिं तु वंदणेणं नरो करे ॥ ३ ॥

तित्थयरत्तं संमत्तं खाइयं सत्तमीइ तइआए । साहूण वंदणेणं बद्धं च दसारसीहेणं ॥ ४ ॥

अभिगमणनमंसणेणं पडिपुच्छणेण साहूणं । चिरसंचियं पि कम्मं सिढिलेइ दसारनेआ वा ॥ ५ ॥

न तु वीरातन्तुवायवत् भावं विना स्वामिप्रतिपत्तिदाक्षिण्यस्वशोभादर्शनाऽऽहाराद्यर्थं वन्दनीयाः ।
तथा दानं श्रेयांसकुमारवत् ।

रिसहेससमं पत्तं निरवज्जं इक्खुरससमं दाणं । सेयंससमो भावो हविज्जइ मग्गिअं हुज्जा ॥ ६ ॥

शीलं सुदर्शनश्रेष्ठिवत् । यथा--

अन्नाणी विय गोवो आराहित्ता मओ नमुक्कारं । चंपाए सिट्ठिसुओ सुदंसणो विस्सुओ जाओ ॥ ७ ॥

भवभमणनिब्भयाए अभयाए पाडिओ वि तह विसमे। निव्वूढोसि सुदंसण! तुह किची तेण महमहइ॥८॥
तप आदीश्वरवत् ।
पुव्वि कयकम्माणं तवेण मुक्खत्ति हेउणा विहियं । रिसहजिणेण पढमं संवच्छरिअं तवो कम्मं ॥ ९ ॥
संवच्छरमुसभजिणो० ॥ १० ॥ भावना भरतेशवत् ।
विहियं वेयावच्चं विहिणा साहूण सुद्धसीलाणं । सिरिरिसहसुओ जाओ भरहो भरहाहिवो तेणं ॥११॥
सो पढमचक्कवट्टी भरहो भविआण कुणह कल्लाणं । आयंसघरे केवललच्छीए जो सयं वरिओ ॥१२॥
यद्वा--रामो तवप्पभावा सुपत्तदाणाउ झत्ति रहकारो । अणुमोअणाइ हरिणो संपत्ता बंभलोगम्मि ॥१३॥
भावण भावइ हरिणलउ नयणे नीर झरंत । मुणि वहरावत करि करी जइ हुं माणस हुंत ॥ १४ ॥
अपि च--दानं धनदवद्देयं शीलं सीतेव निर्मलम् । सुन्दरीवत्तपः कार्यं भावना भरतेशवत् ॥ १५ ॥
किं बहुना? धर्मे दृढता कामदेववत्कार्या। यथा श्रेणिकाभयकुमाराभ्यां धवलकृष्णप्रासादौ कारितौ, पुराद् बहिर्धर्मवत्पापिपरीक्षार्थं नगरे पटहो वादितः । धर्मिभिर्धवलप्रासादे, पाप्मभिः कृष्णे प्रासादे गन्तव्यम् । ततो व्यवहारिप्रभृतयः पौराः कालकसूकरादयश्च धवले समागताः । आनन्दकामदेवौ कृष्णे । राज्ञोक्तम्—

यूयमत्र कस्मादागतौ ?। ताभ्यामुक्तम्--वयं गृहस्थास्तप्तायोगोलककल्पाः सारम्भाः। राज्ञा वन्दितौ पूजितौ। एते दृष्टान्ताः स्वयमेव सविस्तरं वाच्याः ॥ इति जिनार्चोपदेशः ४६ ॥

---

जिनपूजनं विवेकः सत्यं शौचं सुपात्रदानं च। महिमक्रीडागारः शृङ्गारः श्रावकत्वस्य ॥ १ ॥

श्रावकाणामयमेव मुख्यः शृङ्गारः, न तु तिलकमुकुटकङ्कणहारमुद्रिकाकटककेयूरबाहुरक्षकाङ्गदवलयादिकः। यदुक्तम्——

श्रीमज्जिनेन्द्रनमनं तिलकत्यलीके वक्षःस्थले विमलमालति सद्विवेकः।
ताडङ्कति श्रवणयोः सुगुरूपदेशस्त्यागस्तु कङ्कणति पाणितले सतां हि ॥ २ ॥

गुर्वाज्ञा तिलकः सदागमवचः कर्णावतंसः श्रुतौ ज्ञानं हारलता प्रदानमनघं भूषा कराम्भोजयोः।
यात्रा जङ्गमजङ्गमेतरमहातीर्थेषु पादद्वयालङ्कारश्च स एष भूषणविधिः प्रत्यन्तमाधीयताम् ॥ ३ ॥

वारं वार जिणंदवंदणकिणं भालत्थलीमंडणं सिद्धन्तुज्जलवत्थुतत्तसवणं कण्णन्तरे कुण्डलं।
अच्चन्तं गुरुभत्तिमुत्तियसिरी घोलेइ वच्छत्थले सद्दाणं च करांगुलीसु रयणं धन्नाण भूसा इमा ॥ ४ ॥

दृष्टान्तो यथा--

भावसरिच्छं खु फलं इक्काइ वि होइ जं तु किरियाए। जह संबपालयाणं वन्दणवडियाए नेमिस्स ॥ ५ ॥

एकदा द्वारिकायां श्रीनेमिनाथः संध्यायां समवसृतः। कृष्णेनोक्तम्--प्रातः प्राक् श्रीनेमिं यो वन्दिष्यते तस्य पट्टतुरङ्गमं दास्यामीति जल्पिते पालकोऽश्वलोभाद्रात्रावेव गत्वाऽवन्दत। शाम्बः स्ववासभवनस्थ एव सप्ताष्टपदानि संमुखमागत्योत्तरासङ्गं विधाय।

यः प्रातरेव नमतां भवदंह्रियुग्मं संजायते क्षितिरजस्तिलको ललाटे।
पुंसां स एव सपदि त्रिदिवाऽपवर्गलक्ष्मीवशीकरणकौशलमाबिभर्त्ति ॥ ६ ॥

इत्याद्यष्टोत्तरशतनमस्कारैः स्तुत्वा भावेनाऽवन्दत। प्रातः श्रीनेमिमुखात् तयोः स्वरूपं श्रुत्वा शाम्बस्य पट्टाश्वः प्रदत्तः। पालकः पुराद्बहिष्कृतः; अभव्यत्वात् ॥ इत्यर्चोपदेशः ४७ ॥

---

पूआ जिणाण आणं वित्ती साहम्मिआण वच्छल्लं। सीलं परोवयारो विवेगतरुपल्लवा एए ॥ १ ॥

जिनपूजा। यथा——

किंकरन्ति सुरास्तस्य तस्य मित्रन्ति शत्रवः । यस्य जन्मान्तरोपात्ता पूजा पुण्यमहौषधी ॥ २ ॥

जिनाज्ञा यथा—

इक्कु च्चिय तुह आणा सुहदुहं देइ सामियमणंतं । इक्का वि मेहवुट्ठी विसं व अमिअं व पत्तगुणा ॥ ३ ॥

नयगमभङ्गेति जिनाज्ञास्तोत्रं वाच्यम् ।

वृत्तिः——

सच्चित्तदव्वविगइवाहणतंबोलवत्थकुसुमेसु । वाणहिसयणविलेवणबंभदिसिन्हाणभत्तेसु ॥ ४ ॥

इत्याद्यनेकाभिग्रहग्रहणम् ।

साधर्मिकवात्सल्यं यथा—

साहम्मिअम्मि पत्ते घरंगणे जस्स होइ न हु नेहो । जिणसासणभणिअम्मिँणं सम्मत्ते तस्स संदेहो ॥ ५ ॥

शीलं च यथा—

पज्जलिओ वि हु जलणो सीलपभावेण पाणियं हवइ । सा जए जयउ सीआ जीसे पयडा जसपडाया ॥६॥

परोपकारो यथा—

परोपकारः सुकृतैकमूलं परोपकारः कमलादुकूलम्। परोपकारः प्रभुताविधाता परोपकारः शिवसौख्यदाता ॥७॥
दृष्टान्तो यथा--

परकज्जकरणनिरया महाणुभावा चयंति नियकज्जं। असिवोवसमणभेरिं पत्थंतो वासुदेवव्व ॥ ८ ॥

अन्यदा सौधर्मेन्द्रो निजसभायां प्राह--भो देवाः! भुवि श्रीकृष्णः कस्याप्यवगुणं न वदति। तच्छ्रुत्वा कश्चित्सुरः परीक्षार्थमागत्य श्रीकृष्णस्य मार्गे गच्छतः श्वानं मृतं दुर्गन्धं श्यामं कृतवान्। कृष्णः सर्वावगुणान् त्यक्त्वा मरकतस्थाले मुक्ताफलवत्, आकाशे तारकपङ्क्तिवत्, सारमेयस्य कृष्णे शरीरे दन्ता धवला भ्राजमानाः सन्ति।
दोषजालमपहाय मानसे धारयन्ति गुणमेव सज्जनाः। क्षारभावमपहाय वारिधेर्गृह्णते सलिलमेव वारिदाः ॥९॥

तद् दृष्ट्वा सुरस्तुष्टः शक्रप्रशंसादि चाख्यत्। श्रीकृष्णः प्राह—भो देव! यदि तुष्टोऽसि, तदा तथा कुरु यथा सर्वजनानां रोगो न भवति। यतः——

अयं निजः परो वेति गणना लघुचेतसाम्। उदारचरितानां च वसुधैव कुटुम्बकम् ॥ १० ॥

देवेन चन्दनभेरी समर्पिता, प्रोक्तं चास्याः शब्देन षण्मासान् जने रोगा न भवन्ति। सुरस्तिरोदधे। एवं रोगे नश्यति कालान्तरेण भेरीपालकस्तां लोभेन खण्डीकृतवान्; पुना रोगोपशमनाय कृष्णो धन्वन्तरिवैतरणीनामानौ

वैद्यौ चकार । एवं सर्वत्र विवेक एव विलोक्यते । यतः—

यत्संतोषसुखं यदिन्द्रियदमो यच्चेतसः शान्तता यद्दीनेषु दयालुता यदपि गीः सत्यामृतस्यन्दिनी ।
शौर्यं धैर्यमनार्यसङ्गविरतिर्या सङ्गतिः सज्जने एते ते परिणामसुन्दरतराः सर्वे विवेकाङ्कुराः ॥ ११ ॥

विवेकः सह सम्पत्त्या विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ १२ ॥

यथा--दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥१३॥

इति पुरोहितोक्ते भूमिगृहान्तरालभणनोत्पन्नविवेकेन सोमनृपतनयेन भर्तृहरेणोक्तम्—

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ १४ ॥

अतो जिनार्चा विवेकेनैव कार्या ॥ इति जिनार्चोपदेशः ४८ ॥

---

पूजामाचरतां जगत्त्रयपतेः सङ्घार्चनं कुर्वतां तीर्थानामभिवन्दनं विदधतां जैनं वचः शृण्वताम् ।
सद्दानं ददतां तपश्च चरतां सत्त्वानुकम्पाकृतां येषां यान्ति दिनानि जन्म सफलं तेषां सपुण्यात्मनाम् ॥१॥

देवपूजादिपुण्यकरणीयकारकाणां सफलं जीवितं गोत्रं च ज्ञातव्यम् । यतः—

देवं पूजयतो दयां विदधतः सत्यं वचो जल्पतः सद्भिः सङ्गमनुज्झतो वितरतो दानं मदं मुञ्चतः।
यस्येत्थं पुरुषस्य यान्ति दिवसास्तस्यैव मन्यामहे गोत्रं जन्म च जीवितं च सफलं श्लाघ्या कथा चाग्रिमा॥२॥
निद्रान्ते परमेष्ठिसंस्मृतिरथो देवार्चने व्यापृतिः साधुभ्यः प्रणतिः प्रमादविरतिः सिद्धान्ततत्त्वश्रुतिः।
सर्वस्योपकृतिः शुचिव्यवहृतिः सत्पात्रदाने रतिः श्रेयोनिर्मलधर्मकर्मनिरतिः श्लाघ्या नराणां स्थितिः॥३॥
कृत्वाऽर्हत्पदपूजनं यतिजनं नत्वा विदित्वाऽऽगमं हित्वा सङ्गमधर्मकर्मठधियां पात्रेषु दत्त्वा धनम्।
गत्वा पद्धतिमुत्तमक्रमजुषां जित्वाऽन्तरारिव्रजं स्मृत्वा पञ्चनमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम्॥४॥

दृष्टान्तो यथा--चम्पायां जिनदासः श्राद्धस्त्रिसन्ध्यजिनार्चाद्विवारप्रतिक्रमणप्रत्याख्यानकरणपरः साधुसेवापरायणः परिवसति स्म। सोऽन्यदा स्वकार्यसाधनसावधानोऽष्टम्यां निशि शून्यगृहे पौषधं गृहीत्वा कायोत्सर्गे स्थितः, दैवात्परपुरुषासक्तया भार्यया तं शून्यागारे स्थितमजानन्त्या लोहतीक्ष्णकीलिकाञ्चितपादा खट्वा तत्र गृहे क्षिप्ता, कायोत्सर्गस्थजिनदासपादः कीलकेन विद्धः।

महाव्यथायां जाततन्मिथुनमेलापकभारोत्पन्नायां स चिन्तयति स्म--

सह कलेवर! खेदमचिन्तयन् स्ववशता हि पुनस्तव दुर्लभा।

घनतरं च सहिष्यासि जीव ! हे ! परवशो न च तत्र गुणोऽस्ति ते ॥ ५ ॥

शुभध्यानान्मृत्वा शक्रसमानो देवो जातस्तत आगत्य तां भार्यां समबोधयत् ॥ इत्यर्चोपदेशः ४९ ॥

---

वन्द्यास्तीर्थकृतः सुरेन्द्रमहिताः पूजां विधायामलां सेव्याः सन्मुनयश्च पूज्यचरणाः श्रव्यं च जैनं वचः ।
सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलं ध्येया पञ्चनमस्कृतिश्च सततं भाव्या च सद्भावना ॥ १ ॥

अशोकवृक्षः सुरपुष्पवृष्टिर्दिव्यो ध्वनिश्चामरमासनं च ।
भामण्डलं दुन्दुभिरातपत्रं सत्प्रातिहार्याणि जिनेश्वराणाम् ॥ २ ॥

वप्रत्रयं चारु चतुर्मुखाङ्गता चैत्यद्रुमोऽधोवदनाश्च कण्टकाः ।
चतुर्विधा मर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे ॥ ३ ॥

इत्यादिसुरेन्द्ररचितपूजोत्सवाः श्रीजिनाः सुविधिना पूज्या वन्दनीयाश्च । यदुक्तम्—

तिन्नि निसीही तिन्नि पयाहिणा तिन्नि चेव य पणामा । तिविहा पूआइ तहा अवत्थतियभावणं चेव ॥४॥

इत्यादिबृहद्भाष्यलघुभाष्यगता विधिर्विधेया । दृष्टान्तो यथा—

देवगिरिनगरे सा०जगसिंहेन ३६०व्यवहारिणः स्वसमानाः कोटीध्वजाः स्वधनार्पणप्रौढव्यवसायककरणैर्महेभ्याः कृताः प्रत्यहं सविस्तरस्नात्रसाधर्मिकवात्सल्यसद्वार्चादिपुण्यपरम्पराकरणार्थम् ।

॥ इति जिनार्चोपदेशः ५० ॥

कर्तव्यं जिनवन्दनं विधिपरैर्हर्षोल्लसन्मानसैः सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः ।
श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्णाशनं दानादौ व्रतपालने च सततं कार्या रतिः श्रावकैः ॥१॥

चित्रं जगत्त्रयीभर्तुः संलग्ना कुसुमावली । स्वर्गापवर्गसंप्राप्तिफलं भव्येषु यच्छति ॥ २ ॥

यथा—श्रीकुमारपालेन श्रीशत्रुञ्जये श्रीयुगादिप्रतिमा नवलक्षद्रव्यमूल्यनव्यकारितशतदलसौवर्णनवकमलैर्नवाङ्गं पूजिता पूर्वम्; ततः कोटिचम्पकैश्च । गुरुभक्तिर्यथा—

मङ्खलिणावि अ अरहउसीसा तेअस्स उवगया दड्ढा । ते वि तह डज्झमाणा पडिवन्ना उत्तमं ठाणं ॥३॥ *

जिनवचः श्रोतव्यं यथा—

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च गच्छति ॥ ४ ॥

चिलातीपुत्रकथा वंकचूलकथा ॥ सज्झाएण पसत्थं झाणं जाणइ य सव्वपरमत्थं० ॥ ५ ॥
पुव्वभवे विय नाणं विराहिऊणं तहा दुही होउं । बीयभवे सज्झाया मासतुसो केवली जाओ ॥ ६ ॥
मासतुसकथा वाच्या । दानं दातव्यम् । यतः—

दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानात्ततः पृथिव्यां प्रवरं हि दानम् ॥ ७ ॥

चन्दनबालामूलदेवशालिभद्रादीनां दृष्टान्ताः । व्रतपालने अम्बडपरिव्राजककृतपरीक्षाप्राप्तप्रतिष्ठासुलसा-श्राविकादृष्टान्तः ॥ इत्यर्चोपदेशः ५१ ॥



दया दीनेषु वैराग्यं विधिवज्जिनपूजनम् । विशुद्धा न्यायवृत्तिश्च पुण्यं पुण्यानुबन्ध्यदः ॥ १ ॥
इमानि पुण्यानि पुण्यानुबन्धीनि चटत्प्रकर्षसंपत्सुगतिप्रदानि । तत्र जीवदया यथा—

दानं दरिद्रस्य विभोः प्रशान्तिर्यूनां तपो ज्ञानवतां च मौनम् ।
इच्छानिवृत्तिश्च सुखोचितानां दया च भूतेषु दिवं नयन्ति ॥ २ ॥

चाणक्येऽपि च--त्यजेद्धर्मं दयाहीनं क्रियाहीनं गुरुं त्यजेत् ।

त्यजेत्क्रोधमुखीं भार्यां निःस्नेहान् बान्धवांस्त्यजेत् ॥ ३ ॥

क्रियाकलापः सकलोऽपि दयान्वित एव सार्थकः ।

दयां विना देवगुरुक्रमार्चास्तपांसि सर्वेन्द्रिययन्त्रणानि ।

दानानि शास्त्राध्ययनानि सर्वं सैन्यं गतस्वामि यथा वृथैव ॥ ४ ॥

दृष्टान्ता यथा--

शशकात् कुञ्जरो मेघो मेतार्यः क्रौञ्चतः शिवम् । कपोताच्छान्तिनाथोऽभूत् सुव्रतः षष्टियोजनम् ॥ ५ ॥

कृषीमृगः पुष्पचूलो मत्स्यवतीकुमारकः । दामन्नकमुखा ह्येते स्युर्दयागुणशालिनः ॥ ६ ॥

माण्डव्यः शूलिकाभिन्नो विद्धो बाणेन केशवः । तीर्थचारी छिन्नहस्तोऽनिष्टोऽभूद्रङ्गदत्तकः ॥ ७ ॥

वैरास्यं सनत्कुमारचक्रिवद्यथा--

स्वदेहं कुष्ठाक्रान्तं दृष्ट्वा चिन्तयति-मृत्योर्बिभेषि किं बाल! स च भीतं न मुञ्चति । अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ८

शमसुखशीलितमनसामशनमपि द्वेषमेति किमु कामाः ? । स्थलमपि दहति झषाणां किमङ्ग ! पुनरुज्ज्वलो वह्निः ?॥९॥

विधिना जिनपूजा कार्या तदभावे निरर्थकं जन्म । यतः--

नो दृष्टं भवनं शशाङ्कसदृशं शुभ्रं जिनेन्द्रालयं नो शास्त्रं विदितं प्रबोधजनकं भव्याम्बुजानां प्रियम् ।
नो दत्तं मुनिपुङ्गवाय सततं दानं मया भक्तितः कालोऽयं खलु यातु पापमनसां नो साधितं किञ्चन ॥१०॥

तथा विशुद्धा न्यायवृत्तिः शीलादिसदाचाराऽऽचरणं महालाभाय ।

तीर्थानि वा व्रजतु तिष्ठतु वैकपादं तोये निमज्जतु पतत्वथवाऽद्रिशृङ्गात् ।
नैवास्ति शीलरहितस्य परत्र सिद्धिर्बीजाच्छिलातलगतादिव सस्यवृद्धिः ॥ ११ ॥

चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुद्ध्यति । शतशस्तीर्थसंशुद्धं सुराभाण्डमिवाऽशुचि ॥ १२ ॥

श्रीरामवद्यथा--

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ १३ ॥

न्यायपररामनाम्नाऽपि श्रेयः । यतः--

सर्वत्र महतां नामोच्चाराद्भवति वाञ्छितम् । लभते भव्यभोज्यानि शुको राम इति ब्रुवन् ॥ १४ ॥

॥ इति जिनार्चोपदेशः ५२ ॥

भक्तिर्जिनेषु दृढता गुरुभाषितेषु श्रद्धा च धर्मकरणेषु गुणेषु रागः ।
दानेषु तीव्ररुचिता विनयेषु वृत्तिः कस्यापि पुण्यपुरुषस्य भवन्त्यवश्यम् ॥ १ ॥

कस्याऽपि पुण्यवतः पुण्यप्रकारा एते संभवन्ति नान्यस्य । यतः–

प्रातपञ्चन्द्रं सुरभी नकुलो नकुलीं पयश्च कलहंसः । कृष्णकवल्लीं पक्षी शुद्धं धर्मं सुधीर्वेत्ति ॥ २ ॥

जिनभक्तिः । यथा–

प्रासादप्रतिमा यात्रा प्रतिष्ठा च प्रभावना । अमार्युद्घोषणादीनि पुष्णन्ति विमलं यशः ॥ ३ ॥
प्रासादप्रतिमापूजासत्रामारिसुपस्तकैः । वात्सल्यसङ्घपूजाद्यैर्धर्माङ्गैर्धार्मिको नरः ॥ ४ ॥
सङ्घार्चा सङ्घवात्सल्यं शास्त्रारम्भप्रपाटिका । महापूजोद्यापनानि महापुण्यानि पुण्यतः ॥ ५ ॥
मालोद्घट्टनसच्चैत्यपरिपाटीजिनार्चनैः । ध्वजप्रदानसन्नृत्यगीतस्नात्रमहोत्सवैः ॥ ६ ॥ दृष्टान्ताः–

षट्पञ्चाशद्घटीसुवर्णेन श्रीनेमीश्वरेन्द्रमाला सङ्घाधिपपेथडेन परिदधे । तन्नन्दनसं॰झांझणदेवेन श्रीशत्रुञ्जयरैवताचलयोः श्रीऋषभनेमिप्रासादयोः सं॰ आभूप्रदत्तसर्वप्रासाददेवकुलिकावृक्षादिषु पञ्चवर्णपट्टकूलध्वजसहस्रं दृष्ट्वा–

धिगपारं व्यापारं धिक् कमलां मे समुद्रजलबहुलाम् । विहितमुभयानुरूपं किमपि न करणीयमिह येन ॥७॥

इति चेतसि विचिन्त्य चतुरङ्गुलपृथुला द्वादशयोजनदीर्घा सौवर्णमयी एकैव ध्वजा दत्ता । एवं मधुमतीवासिना सा० झंगडाकेन श्रीकुमारपालसङ्घे श्रीविमलाचलरैवतकदेवपत्तनेषु सपादकोटिमूल्यरत्नत्रिकेण प्रथममाला गृहीता । १२ वारतज्जनकमं०हांसाक्षेमजलधियात्राकरणसंतुष्टसमुद्राधिष्ठायकार्पितपञ्चरत्नमध्यात् शेषद्वयं कुमारपालेन मूल्येन गृहीत्वा तत्पदकगर्भे हारपञ्चकमकारि श्रीशत्रुञ्जयरैवतदेवकपत्तनभृगुकच्छात्रिभुवनविहारनिमित्तम् । तथा गुरुवाक्ये दृढता यथा--

गुर्वेकवाक्यादपि पापभीता राज्यं त्यजन्ति स्म नराः सुधीराः ।
व्याख्यासहस्रैर्न भवेद्विरागो ध्रुवं कलौ वज्रहृदो मनुष्याः ॥ ८ ॥

जम्बूस्वाम्यादीनां दृष्टान्ताः । तथा धर्मकरणीयेषु वासना । यथा--

भक्तिस्तीर्थंकरे गुरौ जिनमते श्रद्धालुता शासने शुश्रूषा मुनिपुङ्गवे सुविहिते दानप्रवृत्तिः सदा ।
वात्सल्यं सहधर्मचारिषु दया भूतेषु सर्वेष्वहो ! मन्ये श्रावकधर्मवर्तिनि जने पर्याप्तकल्पो विधिः ॥ ९ ॥

वित्तसाध्यमिह दानमुत्तमं शीलमप्यविकलं सुदुर्द्धरम् ।

दुष्कराणि च तपांसि भावना स्वीयचित्तवशगेति भाव्यताम् ॥ १० ॥
भवन्ति भूरिभिर्भाग्यैर्धर्मकर्ममनोरथाः । फलन्ति यत्पुनस्तेऽपि तत्सुवर्णस्य सौरभम् ॥ ११ ॥

॥ इति जिनार्चोपदेशः ५३ ॥

—०*०—

उपदेशतरङ्गिण्यां तृतीयोऽभूत्तरङ्गकः । पूजापञ्चाशिकानामा रत्नमन्दिरनिर्मितः ॥ १२ ॥

इति तपागच्छनायकश्रीसोमसुन्दरसूरिश्रीरत्नशेखरसूरिपं०-नन्दिरत्नगणिशिष्यपं०-रत्नमन्दिरगणिगुम्फितायां श्रीउपदेश-तरङ्गिण्यां पूजापञ्चाशिकानामा तृतीयस्तरङ्गः समाप्तः ॥

## अथ तीर्थयात्राकरणोपदेशरूपश्चतुर्थस्तरङ्गः ।

तद्यथा--वपुः पवित्रीकुरु तीर्थयात्रया चित्तं पवित्रीकुरु धर्मवाञ्छया ।
वित्तं पवित्रीकुरु पात्रदानतः कुलं पवित्रीकुरु सच्चरित्रैः ॥ १ ॥

यथा १२ वर्षवनावस्थानान्ते कल्याणमन्दिरमहास्तोत्रस्फोटितमहाकाललिङ्गमध्यश्रीपार्श्वप्रतिमाप्रकटीकरण-

२५

वापीमध्यशासनदेवतादत्तौषधसर्षपक्षेपण ३२वार्षिक३६दण्डायुधश्रमव्यग्रसर्षपप्रमाणसुभटप्रकटनमुद्गलमहाकटक-भञ्जनमानसिकनमस्कारधर्मलाभप्रदानबहुकाव्यकरणाद्यनेकावदातकारकश्रीसिद्धसेनदिवाकरप्रतिबोधितश्रीविक्र-मादित्यनृपेण श्रीशत्रुञ्जययात्रा कृता। तद्विस्तरो यथा-१४मुकुटबद्धनृपाः, ७०लक्षाणि श्राद्धकुटुम्बानाम्, श्रीसि-द्धसेनदिवाकरप्रमुखाः पञ्चसहस्रसूरयः, एकशतैकोनसप्ततिः सौवर्णदेवालयाः, एककोटिदशलक्षपञ्चसहस्राणि शकटानाम्, १८ लक्षाणि तुरङ्गमानाम्, षट्त्रिंशत्शतानि गजानाम्; एवं करभवृषभादीनां मानं ज्ञेयम् ॥

॥ इति यात्रोपदेशः १ ॥

---

प्रभावना श्रीजिनराजचैत्ये जिनप्रतिष्ठा जिनतीर्थयात्रा। अमारिरेतानि महावृषाणि पञ्चापि पञ्चाङ्गरमाकराणि ॥१॥

दृष्टान्तो यथा--एकदा १८०० कोटीध्वजव्यवहारिभिः सार्द्धं श्रीकुमारपालेन पौषधो गृहीतः, राज्ञा गुर-वो वन्दिताः। अग्रे निषण्णस्तदा श्रीहेमाचार्यैस्तीर्थोपदेशः प्रदत्तः। यथा--

आरम्भाणां निवृत्तिर्द्रविणसफलता सङ्घवात्सल्यमुच्चैर्नैर्मल्यं दर्शनस्य प्रणयिजनहितं जीर्णचैत्यादिकृत्यम्।
तीर्थौन्नत्यं जिनेन्द्रोदितवचनकृतिस्तीर्थकृत्कर्मबन्धः सिद्धेरासन्नभावः सुरनरपदवी तीर्थयात्राफलानि ॥२॥

तदा राज्ञा पृष्टम्--भगवन् ! कतिधा तीर्थयात्रा ?। गुरुः प्राह--त्रिधा—

अष्टाह्निकाभिधामेकां रथयात्रां तथाऽपराम् । तृतीयां तीर्थयात्रां चेत्याहुर्यात्रां त्रिधा बुधाः ॥ ३ ॥

ततः पत्तनात् श्रीकुमारपालेन ७२ राणकदेवालयप्रधानाम्बडदेबाहडदेप्रमुखाष्टादशशतकोटीध्वजव्यवहारिदेवालयाद्याडम्बरेण श्रीविमलाचलरैवतकयात्रा रीषट्कप्रतिपालनपूर्वं स्थानस्थानस्नात्रध्वजासङ्घाऽर्चासङ्घवात्सल्यगीतनृत्तादिमहोत्सवैः। यात्राविस्तरः श्रीजिनमण्डनवाचकविरचितकुमारपालप्रतिबोधमध्यगतो वाच्यः॥

॥ इति यात्रोपदेशः २ ॥

यात्रायां किल संचरन्ति कृतिनः पञ्चेन्द्रियाणां यमं कृत्वा दानपरायणाः शुभधियः पित्रोः पदाराधनाः ।
तत्पादोत्थितधूलिमप्यगतिकाः श्लिष्यन्ति मोक्षार्थिनस्तेषां पुण्यमितिं स वेत्ति भगवान् सर्वज्ञ एव स्वयम् ॥१॥

तद्विधिर्यथा--एकाहारी भूमिसंस्तारकारी पद्भ्यां चारी शुद्धसम्यक्त्वधारी ।
यात्राकाले सर्वसच्चित्तहारी पुण्यात्मा स्याद् ब्रह्मचारी विवेकी ॥ २ ॥

तथा यात्रापुण्यविधानेन धर्माचार्यसाधर्मिकभक्तिः कृता स्यात् । यदुक्तम्--

प्रतिवर्षं सहर्षेण निजावित्तानुमानतः । पूजनीयाः सधर्माणो धर्माचार्याश्च धीमता ॥ ३ ॥

यथा--उम्बरराजस्थापितश्रीअर्बुदाचलतलहट्टिकालङ्कारउम्बरणीनगरतः सा०पारससुतसा०देसलः श्रीशत्रुञ्जयादिसप्ततीर्थेषु१४कोटिद्रव्यव्ययेन चतुर्दशयात्रां कृतवान् । उक्तं च——

श्रीदेशलः सुकृतपेशलवित्तकोटीश्चञ्चच्चतुर्दशजगज्जनितावदातः ।
शत्रुञ्जयप्रमुखविश्रुतसप्ततीर्थयात्राश्चतुर्दश चकार महामहेन ॥ ४ ॥

तदन्वये सा०लछवीजडाभ्यां विमलवसत्युद्धारः कारितः सं० १३५३ वर्षे । एवमपरैस्तीर्थयात्रा विधेया ॥

॥ इति यात्रोपदेशः ३॥



सदा शुभध्यानमसारलक्ष्म्याः फलं चतुर्धा सुकृताप्तिरुच्चैः ।
तीर्थोन्नतिस्तीर्थकृतां पदाप्तिर्गुणा हि यात्राप्रभवाः स्युरेते ॥ १ ॥

तीर्थयात्राकर्तुः सदा मार्गे देवपूजाग्राम२चैत्यपरिपाटीसाधर्मिकवात्सल्यादिमनोरथकरणपूरणादिशुभध्यानं भवति, न तु धान्यघृतचर्मचीवरादिक्रयविक्रयकारकवद् मेघाभावपशुरोगमहर्घ्यतादिदुर्ध्यानम्, तथा नवरं

सप्तक्षेत्र्यां वपनेन चपलकमलासफलीकरणं स्यात्; तथा ६रीपालनेन चतुर्द्धा दानशीलतपोभावनादिसुकृत-प्राप्तिः स्यात् । तथा स्थाने स्थाने महामहोत्सवेन परेषां चमत्कारकरणेन तीर्थोन्नतिर्जिनशासनप्रभावना स्यात्, तीर्थङ्करगोत्रकर्मबन्धः स्यात् परभवे । दृष्टान्तो यथा--धारापद्रनगरे लघुकाश्मीरापराभिधाने पश्चिम-मण्डलीकबिरुदः श्रीश्रीमालज्ञातीयः सं॰आभूः । यस्य यात्रायां सप्तशतदेवालयाः एकसहस्रपञ्चशतदशोत्तरजिनबिम्बानि ४सहस्रशकटानि पञ्चसहस्राणि तुरङ्गमाणाम् , २२ शतोष्ट्राः, ९० सुखासनानि, ९९ श्रीकर्यः ७ प्रपाः ४२ जलवाहिबलीवर्दाः, २०जलवाहिमहिषाः; शतं रन्धनकटाहिकानि, ३६ सूरयः, शतं कान्दविकानाम्, शतं सूपकाराणाम् , शतद्वयं मालाकाराणाम् , शतं ताम्बूलिकानाम् , १ शतं ३६हट्टानि १४लोहकाराः १६सूत्रधाराः; एवं १२कोटिस्वर्णव्ययः; इत्यादिबहुपरिवारपरिवृतः श्रीशत्रुञ्जयतीर्थयात्रां पञ्चवर्णपट्टकूलसहस्रध्वजाप्रदानादिबहुविस्तरसुभगां कृतवान् । तेनैव एककोटिसुवर्णटङ्कैः श्रीज्ञानकोशे ६ लक्ष ३९ सहस्रप्रमाणसिद्धान्तप्रतिरेका सौवर्णाक्षरा, द्वितीया सर्ववर्तमानग्रन्थानां मष्यक्षरमयी प्रतिर्लेखिता; तथा ३६० श्राद्धा आत्मसदृक्षाः कृताः, प्रत्यहं स्नात्रसाधर्मिकवात्सल्यसङ्घार्चाप्रभावनाकरणार्थम् । तेनैव च भूनेतामहांकूग्रामयोः सारूआरघाटमयौ द्वौ प्रासादौ कारितौ । सारूआरघाट इति किमुच्यते ? यस्यैकप्रासादस्य मूल्येन अन्ये सामान्याः कोरणीरहिताः ८४

प्रासादा निष्पद्यन्ते । एवं सप्तक्षेत्र्यां सप्तकोटीद्रव्यव्ययः प्रान्तसमये स्वहस्तेन कृतः ॥ इति यात्रोपदेशः ४॥



श्रीतीर्थपान्थरजसा विरजीभवन्ति तीर्थेषु बम्भ्रमणतो न भवे भ्रमन्ति ।
द्रव्यव्ययादिह नराः स्थिरसंपदः स्युः पूज्या भवन्ति जगदीशमथार्चयन्ति ॥ १ ॥

यथा श्रीवस्तुपालेन सार्द्ध १२ यात्रा कृता । तत्राद्यतीर्थयात्राविस्तरो यथा—

पाथेयवन्तः पथि योग्ययुग्याः सोपानहः सोदकभाजनाश्च ।
श्रीवस्तुपालेन समं जनौघाः प्रयाणकाय प्रवणा बभूवुः ॥ २ ॥

समं समग्रैरपि बन्धुवर्गैर्निसर्गबन्धुर्विबुधव्रजस्य । शुभे मुहूर्तेऽथ शुभैर्निमित्तैर्मन्त्री स्वनाथानुमतः प्रतस्थे ॥३॥

न वाहनं यस्य स तस्य यानं नाऽऽसीद् धनं यस्य स तस्य वित्तम् ।
न चीवरं यस्य स तस्य वस्त्रं कल्पद्रुकल्पः प्रददौ पृथिव्याम् ॥ ४ ॥

भुङ्क्ते स्म सर्वेष्वपि भुक्तवत्सु शेते स्म सुप्तेषु स यात्रिकेषु। प्रबुध्यते स्म प्रथमं तदित्थं सङ्घप्रभुत्वव्रतमाचचार॥५॥
प्रभूतभोज्यानि बहूदकानि सुगोरसान्युन्मदमानवानि। तस्याति दुर्गेऽपि पथि प्रयाणान्युद्यानलीलासदृशान्यभूवन्॥६॥

यात्राप्रसङ्गेन जगाम येषु पुरेषु पौरोच्छ्रिततोरणेषु । तेषामधीशैः स विशेषमेष संमान्यमानः सममानयत्तान् ॥७॥
समुद्धृतैर्जीर्णजिनेन्द्रहर्म्यैर्नवैः सरोभिश्च सरोजरम्यैः । प्रस्थानमार्गः सचिवस्य सोऽभूदजानतामप्युपलक्षणीयः॥८॥

यावन्ति बिम्बानि जिनेश्वराणां श्वेताम्बराणां च कदम्बकानि ।
मार्गेषु तेषां कलयन् स पूजां शत्रुञ्जयं शत्रुजयी जगाम ॥ ९ ॥
तत्रादिनाथस्य नमस्यमूर्त्तेः स्नात्रं च पूजां च विधाय मन्त्री ।
पुरः कुरङ्गीनयनाः प्रमोदनृत्यन्मना नृत्यमकारयत् सः ॥ १० ॥

घनैः प्रसूनैर्वसनैरनूनैः पत्रैः पवित्रैरशनैः प्रधानैः । नृत्तैर्वधूनां च गृहीतचित्तैर्गानैः सदानैर्विततान पूजाम्॥११॥

इत्यादिकीर्तिकौमुदीकाव्यमध्यगतयात्रावर्णन८१ काव्यानि वाच्यानि । तत्र प्रथमयात्रायां सं० १२८५ कृतायामयं विस्तरः । २४ दन्तमया देवालयाः, १२० काष्ठदेवालयाः, ४५ शतानि शकटानाम्, १८ शतानि वाहिन्यः, ७०० सुखासनानि, पञ्चशतानि पालुषिकानाम्, ७०० आचार्याः, द्विसहस्रश्वेताम्बरतपोधनाः, ११शतादिगम्बराः १९ शतश्रीकर्यः, ४ सहस्रतुरङ्गमाः, द्विसहस्रोष्ट्राः, सप्तलक्षमनुष्याः । इदं प्रथमयात्राप्रमाणम् । तदनु प्रवर्धमानप्रमाणाऽग्रेतनयात्रा ज्ञेयाः ॥ इति यात्रोपदेशः ५ ॥

एअं जम्मस्स फलं सारं विहवस्स इत्तियं चेव । जं अच्चिज्जइ गंतुं सित्तुंजे रिसहतित्थयरो ॥ १ ॥
छट्ठेणं भत्तेणं अपाणएणं च सत्त जत्ताओ । जो कुणइ सित्तुंजे सो तईअभवे लहइ सिद्धिं ॥ २ ॥
न वि तं सुवन्नभूमीभूसणदाणेण अन्नतित्थेसु । जं पावइ पुन्नफलं पूआन्हवणेण सित्तुंजे ॥ ३ ॥

दृष्टान्तो यथा—सुराष्ट्रायां गोमण्डलग्रामवास्तव्यः सप्तपुत्रः, सप्तशतसुभटः, १२ शतशकटसङ्घ १२ कोटिस्वर्णपतिः सं० धाराकः श्रीशत्रुञ्जययात्रां कृत्वा ५० वर्षावधि दिगम्बराधिष्ठितरैवतयात्रावसरे खङ्गारदुर्गपसैन्यैः सह युद्धे ७पुत्र७शतसुभटक्षये श्रीबप्पभट्टिप्रतिबोधितं गोपगिरौ श्रीआमभूपतिं ज्ञात्वा तस्याऽऽमनृपस्य सूरिपार्श्वे व्याख्यानोपविष्टस्याष्टश्राद्धैः समं सं० धाराकः समागतः। तेन दिगम्बरगृहीततीर्थस्वरूपं कथितम्। गुरुभिस्तन्महिमोक्तौ आमनृपेण गिरिनारनेमिवन्दनं विना भोजनाभिग्रहो गृहीतस्तदनु सहस्रश्राद्धैरपि स एवाभिग्रहो गृहीतस्ततः संघश्चचाल। १ लक्षं पौष्टिकानाम्, एकलक्षं तुरङ्गमाणाम्, ७ शतानि गजानाम्, विंशतिसहस्राणि करभाणाम्, लक्षत्रयं पादचाराणाम्, विंशतिसहस्राणि श्रावककुलानाम्, ३२उपवासैः स्तम्भतीर्थे प्राप्तः। राज्ञः शरीरं खिन्नम्। गुरुभिरम्बिकां प्रत्यक्षीकृत्य अपापमठात् प्रतिमैका आनीता। नृपाभिग्रहो मुत्कलो जातः, मासमेकं दिगम्बरैः सह वादः, पश्चादम्बिकया उज्जितसेलसिहरेतिगाथया विवादो भग्नः; तीर्थं लात्वा दिगम्बरश्वेताम्बरजिनार्चानां

नग्नावस्थाञ्चलिकाकरणेन विभेदः कृतः ॥ इति यात्रोपदेशः ६॥

---

सद् द्रव्यं सत्कुले जन्म सिद्धक्षेत्रं समाधयः । संघश्चतुर्विधो लोके सकाराः पञ्च दुर्लभाः ॥ १ ॥
शत्रुञ्जयः शिवपुरं नदी शत्रुञ्जयाऽभिधा । श्रीशान्तिः शमिनां दानं शकाराः पञ्च दुर्लभाः ॥ २ ॥
नमस्कारसमो मन्त्रः शत्रुञ्जयसमो गिरिः । गजेन्द्रपदजं नीरं निर्द्वन्द्वं भुवनत्रये ॥ ३ ॥

अत्र श्रीभरतेश्वरयात्रा अयोध्यातः ३२ सहस्रमुकुटबद्धनृपाः, ८४ लक्षतुरङ्गमाः, ८४ लक्षेभाः, ८४ लक्षरथाः, ९६ कोटिपादचारी, ८४ लक्षा निःस्वानः। एवं ऋद्धिविस्तारः श्रीशत्रुञ्जयमाहात्म्यगतो वाच्यः॥ इति यात्रोपदेशः ७॥

—*—

तैश्चन्द्रे लिखितं स्वनाम विशदं धात्री पवित्रीकृता ते वन्द्याः कृतिनः सतां सुकृतिनो वंशस्य ते भूषणम् ।
ते जीवन्ति जयन्ति भूरिविभवास्ते, श्रेयसां मन्दिरं सर्वाङ्गैरपि कुर्वते विधिपरा ये तीर्थयात्रामिमाम् ॥ १ ॥

इति श्रीतपा० श्रीधर्मघोषसूरिप्रदत्तोपदेशं श्रुत्वा सं० पेथडदे--झाञ्झणदेवाभ्यां श्रीविमलाचलरैवतकयात्रा षट्पञ्चाशद्घटीस्वर्णेन्द्रमालापरिधानतीर्थद्वयस्वर्णकध्वजाप्रदानस्वर्णपत्रश्रीशत्रुञ्जयादिनाथप्रासादमढनाद्यनेकपुण्य-

करणीयभासुरा कृता ॥ तद्विस्तरः पं०--श्रीरत्नमण्डनसूरिकृतसुकृतसागरकाव्यगतो वाच्यः ॥ इति यात्रोपदेशः ८ ॥

---

तीर्थे यात्रा विधेया निजकरकमलैः पूजनीया जिनेन्द्रा आदेशाः श्रोत्रपेयाः सगुणगणभृतां जन्तवश्चानुकम्प्याः ।
देयं पात्रेषु दानं सुकृतिजनशुभा संगतिः साधु कार्या मोक्षश्रीरेष्यतीत्थं विधिवदिह जनाः कुर्वतां पश्यतां च॥१॥

दृष्टान्तो यथा--भरतेश्वरेण श्रीशत्रुञ्जयस्वर्णमयप्रासादो मणिमयबिम्बं च कारितम्; तद्वारके ९९ कोटि ८९ लक्ष ८४ सहस्रराजानः सङ्घपतयः संजाताः । सगरेण ताम्रमयः प्रासादो रत्नमयबिम्बं कारितम् । तद्वारके ५० कोटि ९५ लक्ष ७५ सहस्रराजानः सङ्घपतयः । पाण्डवैः काष्ठमयप्रासादो लेप्यमयं बिम्बं कारितम्; तद्वारके २५ कोटि ९५ लक्ष ७५ सहस्रराजानः सङ्घ० । पाण्डवविक्रमादित्यान्तराले ८४ सहस्रनृपाः श्रेणिकदधिवाहन-शिलादित्यसदृक्षाः सङ्घ० श्रेष्ठि० जावडि श्रे० सा० समरान्तराले ३ लक्ष ८४ सहस्रश्रावकसङ्घ० ७० सहस्रभाव-सारसङ्घ० १६ सहस्रराजपुत्रसङ्घ० १५ सहस्रजैनब्राह्मणसङ्घ० १२ सहस्रांजिणासं० ९ सहस्रलेऊआसङ्घ० ५ सहस्र ४५ कंसारासं० सप्तसहस्रमातङ्गसंघ० ५०० ऊकड १ मातङ्गस्य संघि आगता; ५ श्रीशत्रुञ्जयप्रद-क्षिणां दत्त्वैव तलहट्टिकातः पश्चाद् वलिता मलिनत्वान्न तूपरि चटिताः ॥ इति यात्रोपदेशः ९ ॥

तैरात्मा सुपवित्रितो निजकुलं तैर्निर्मलं निर्मितं तैः संसारमहान्धकूपपततां हस्तावलम्बो ददे ।
लब्धं जन्मफलं कृतं च कुगतिद्वारैकसंरोधनं ये शत्रुञ्जयमुख्यतीर्थनिवहे यात्रासु बद्धोद्यमाः ॥ १ ॥
यतः--कृत्वा पापसहस्राणि हत्वा जन्तुशतानि च । इदं तीर्थं समासाद्य तिर्यञ्चोऽपि दिवं ययुः ॥ २ ॥
शत्रुञ्जये जिने दृष्टे दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं च पूजास्नात्रविधानतः ॥ ३ ॥
पल्योपमसहस्रं च ध्यानाद्, लक्षमभिग्रहात् । दुष्कर्म क्षीयते मार्गे सागरोपमसंचितम् ॥४॥ (युग्मम् )

इत्यादि श्रीशत्रुञ्जयमाहात्म्यं बहु कल्पस्तोत्रगतं वाच्यम् ॥ सर्वेष्वपदेशेषु दृष्टान्ताः ५२देवालययात्राकारकसा० सारङ्ग-४४देवालययात्राकृत्सा०सोनपाल-२४देवालययात्राकृत्सा०सालिग-सा०समरा-१०देवालययात्रापरसा०गुणराजादीनां वाच्याः ॥ इति यात्रोपदेशः १० ॥

संसारेऽसुमता नरामरभवाः प्राप्ताः श्रियोऽनेकशः कीर्तिस्फूर्तिमदर्जितं च शतशः साम्राज्यमप्यूर्जितम् ।
स्वाराज्यं बहुधा सुधाभुजचयाराध्यं समासादितं लेभे पुण्यमयं कदापि न पुनः संघाधिपत्यं पदम् ॥ १ ॥

दृष्टान्तो यथा--बप्पभट्टिसूरिभिः प्रत्यहं पञ्चतीर्थ्यां देववन्दनं विना वाराकरणनियम आकाशगामिनीविद्यया प्रतिपालितः ।

आदिनाथ सेत्तुंजि नेमि गिरिनारि नमेविणु । मुनिसुव्रत भरुअच्छि वीर मोढेर थुणेविणु ॥
मुहरा पास सुपास नमिय दुअ घडि अब्भितरि । सोरठ ढुंढण विहरिवार गोवाल गिरीसरि ॥
अट्ठसयछव्वीसा वीरजिणमुहरि नयरि थिर थप्पीउ । सो आमरायनयपयकमल बप्पहट्टिसूरि चिरं जयउ ॥२॥

॥ इति यात्रोपदेशः ११ ॥

श्रीसोमसुन्दरगुरुप्रवरप्रसादात् तुर्यस्तरङ्ग उपदेशतरङ्गवत्याम् ।
आसीदसीमविमलाचलमुख्यतीर्थयात्राविधानविधिदर्शनसावधानः ॥ ३ ॥

इति श्रीतपागच्छनायकश्रीसोमसुन्दरसूरिश्रीरत्नशेखरसूरिपं०-नन्दिरत्नगणिशिष्यपं०-रत्नमन्दिरगणिगुम्फितायां श्रीउपदेशतरङ्गिण्यां चतुर्थस्तीर्थयात्रोपदेशस्तरङ्गः समाप्तः ॥

## अथ धर्मोपदेशरूपः पञ्चमस्तरङ्गः ।

तद्यथा—यत् कल्याणकरोऽवतारसमयः स्वप्नानि जन्मोत्सवे यद् रत्नादिकवृष्टिरिन्द्रविहिता यद् रूपराज्यश्रियः ।

यद् दानं व्रतसंपदुज्ज्वलतरा यत् केवलश्रीर्नवा यद् रम्याऽतिशया जिने तदखिलं धर्मस्य विस्फूर्जितम् ॥१॥

जिनानामवतारकल्याणकं माङ्गलिककारणं यथा--स्त्रीत्वेऽपि जनन्या रत्नकुक्षिधारिणि! तुभ्यं नमोऽस्त्विति शक्रादीनां नमस्करणीयता, जनकगृहे पुराणनिधानस्थापना, श्रीवर्धमानावतारे सर्वर्द्ध्या वृद्धिः, श्रीशान्त्यवतारे जननीस्नानवारिणा रोगोपशान्तिः, श्रीअजितावतारे जनन्या जयः, गयवसहेत्यादि १४स्वप्ना अतिदुर्लभाः।

तथा जन्मनि--

यद् घण्टानदनं स्वयं सुरपतेर्यद् विष्टराऽन्दोलनं दिक्कन्याऽऽगमनं सुपर्वचलनं जन्मोत्सवायाऽऽदरात्।
वृक्षाणां नमनं ह्यधोमुखतया यत् कण्टकाध्यासनं प्रौढच्छत्रमिवाधिपस्य तदिदं धर्मस्य संसूचकम् ॥ २ ॥

नारका अपि मोदन्ते० ॥३॥ मणिमौक्तिकवस्त्ररत्नवृष्टिरिन्द्रकृता पारणकादौ। जिनरूपं जगदद्भुतम्। यतः--

सव्वसुरासुररूवं अंगुट्ठयमाणयं विउव्विजा। जिणपायंगुट्ठं पइ न सोहइ एतं जह इंगालो ॥ ४ ॥

यैः शान्तरागरुचिभिः० ॥ ५ ॥ राज्यश्रियस्त्रैलोक्यस्पृहणीयाः। यतः--

सन्ती कुंथू अरा अरिहन्ता चेव चक्कवट्टी अ। अवसेसा तित्थयरा मण्डलिआ आसि रायाणो ॥ ६ ॥

दानं तु सांवत्सरिकम्--

एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा । सूरोदयमाईअं दिज्जइ जा पायरासाओ ॥ ७ ॥
तिन्नेव य कोडिसया अट्ठासीअ च हुन्ति कोडीओ । असियं च सयसहस्सा एयं संवच्छरे दिन्नं ॥८॥

इन्द्रादिकृतदीक्षामहोत्सवः शिबिकासनवादित्रच्छत्रादि; केवलज्ञाने समवसरणस्थापनाष्टप्रातिहार्य ३४ अतिशयादिका यदनन्ता जिनर्द्धयः सहस्रजिह्वावतोऽपि वक्तुमशक्याः, तत्सर्वं पूर्वजन्माराधित २० स्थानकादिश्रीधर्मफलं ज्ञेयम् । यतः—

श्रीदानधर्मकल्पद्रुर्जीयात् सौभाग्यभाग्यभूः । पूर्वापश्चिमतीर्थेशलक्ष्मीभोगमहाफलः ॥९॥ इति धर्मोपदेशः ॥१॥

आधारो यस्त्रिलोक्या जलधिजलधराऽर्केन्दवो यन्नियोज्या भुज्यन्ते यत्प्रसादादसुरसुरनराधीश्वरैः संपदस्ताः । आदेश्या यस्य चिन्तामणिसुरसुरभीकामकुम्भादिभावाः श्रीमज्जैनेन्द्रधर्मः किसलयतु स वः शाश्वतीं सौख्यलक्ष्मीम् ॥१॥

यः श्रीजिनधर्मस्त्रैलोक्याधारः । यदुक्तम्—निरालम्बा निराधारा विश्वाधारा० ॥२॥ वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा० ॥३॥ अबन्धूनामसौ बन्धुः० ॥४॥ दृष्टान्तः—धर्माद् निराधारस्यापि कुमारपालस्य १८देशराज्यप्राप्तिः, श्रीपालस्य सिद्धचक्राऽऽराधनतः कुष्ठोपशमः, श्रीविक्रमार्कस्याग्निवेतालवशीकरणम् ।

यच्चक्रिताऽऽसा भरतेश्वरेण, बाहूबलिर्बाहुबली बभूव। सनत्कुमाराऽभयशालिभद्रा रूपर्द्धिधीभोगयुताः क्रमेण॥५॥
यदम्बुचीवो नृपतिर्बभूव, नन्दस्य यल्लेप्यनरैरयोधि। स्थालं सुभूमस्य बभूव चक्रं, तद् धर्ममाहात्म्यमिदं वदन्ति॥६॥

यष्टिः करात् कङ्गुनृपस्य विद्युत्, पुण्याढ्यभूपस्य तृणं तु वज्रम्।
रक्षाऽभवत् पाण्डुभुवां सुरङ्गा तद् धर्मविस्फूर्जितमामनन्ति ॥ ७ ॥
धन्योऽधिको यत्स्वसहोदरेभ्यो न्यासे निधिं प्राप च वस्तुपालः।
यज्जीवितं चाऽऽप कुमारपालस्तद् धर्ममाहात्म्यमुदाहरन्ति ॥ ८ ॥

तथा धर्मस्य जलधिमेघादय आदेशकारिणः, तद्यथा--द्विलक्षयोजनविस्तार१६सहस्रयोजनप्रमाणोच्चशिखो लवणसमुद्रो वेलन्धरदेवताधार्यमाणजलनिचयो यज्जम्बूद्वीपं न प्लावयति, मर्यादां च न मुञ्चति; तद् धर्ममाहात्म्यम्। यतः--

आप्लावयति नाऽम्भोधिराश्वासयति चाऽऽम्बुदः। यन्महीं, तत्प्रभावोऽयं ध्रुवं धर्मस्य केवलम् ॥ ९ ॥
न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नाऽनिलः। अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम् ॥१०॥

तथा मेघोऽपि धर्मानुसारेण वर्षति। यथा--चत्तारि मेहा पन्नत्ता--पुक्खलसंवट्टए नामं एगे, जीमूए नामं एगे,

पज्जन्ने नामं एगे, जिम्हे नामं एगे ।

पुक्खलसंवट्टएणं महामेहेणं एगेणं वासेणं दसवाससहस्साइं भावेइ । जीमूएणं महामेहेणं एगेणं वासेणं दसवासाइं भावेइ । पज्जन्नेणं महामेहेणं एगेणं वासेणं दसवाससयाइं भावेइ । जिम्हेणं मेहेणं बहूहिं वासेहिं एगं वासं भावेइ, नो भावेइ वा ।

एवं यथा यथा धर्मस्य हानिस्तथा तथा मेघस्यापि जिह्मता॥ धर्मवृद्धौ सर्वरसानां वृद्धिः--युगादिदेववारके मृत्तिका शर्करोपमा, घृतस्नेहश्चानन्तगुणः, सर्वप्रकारप्रजावृद्धिश्च।

किञ्च--सूर्याचन्द्रमसावेतौ विश्वोपकृतिहेतवे । उदयेते जगत्यस्मिन् नूनं धर्मस्य शासनात् ॥ ११ ॥

तथा धर्मतः सुरेन्द्रचक्रवर्तिवासुदेवादिभिः संपदो भुज्यन्ते। यथा--सौधर्मेन्द्रस्य ३२लक्षविमान ८४सहस्रसामानिकदेव ८इन्द्राणीप्रभृतिप्रभुता, तथा ६खण्डभरत३२सहस्रदेश९निधान१४रत्न९६कोटिग्राम९६कोटिपायक८४लक्षगजतुरङ्गमरथ६४सहस्रान्तःपुरी १लक्ष २८सहस्रवाराङ्गना ३२सहस्रमुकुटबद्धनृपसेव्यमानतादिप्रभुता चक्रिणां भवति; तदर्धं वासुदेवानां राज्यं भवति, तथा धर्मस्यादेशकारिणश्चिन्तामणिकामधेनुकामकुम्भदक्षिणावर्तशङ्खकृष्णचित्रावल्लिस्पर्शपाषाणकल्पवृक्षादिपदार्थाः संभवन्ति । यथा युगलिनां धर्मोदये कल्पवृक्षा

वाञ्छितं ददाति । श्रीवस्तुपालादीनां स्वप्नं दत्त्वा दक्षिणावर्तशङ्खकृष्णचित्रावलिप्रभृतयो मिलिताः । स श्रीधर्मो युष्माकं सौख्यलक्ष्मीं विस्तारयतु॥ इति श्रीधर्मोपदेशो द्वितीयः २ ॥

—*—

आरोग्यं सौभाग्यं धनाढ्यता नायकत्वमानन्दः । कृतपुण्यस्य स्यादिह सदा जयो वाञ्छिताऽवाप्तिः ॥१॥

धर्मादारोग्यं स्याद् यथा--श्रीआदिनाथस्य८४पूर्वलक्षमध्ये शिरोऽर्तिमात्रमपि नाऽजनि। संवत्सरतपःपारणेऽपि सबलेक्षुरससहनम्, व्याख्यानादौ श्रमाभावः॥ सौभाग्यं च, यथा--वसुदेवस्य सामान्यत्वेऽपि ३२सहस्रकन्यापाणिग्रहणम्। यदुक्तम्--किं आसि नंदिसेणस्स० ॥ २ ॥

विज्जाहरीहिं सहरिसं नरिन्ददुहिआहिं अहमहंतीहिं । जं पत्थिज्जउ तइया वसुदेवो तं तवस्स फलं ॥३॥

धनाढ्यता, यथा--श्रीशालिभद्रस्य ।

स्वर्भोगभङ्गी नृपतिक्रयाणकं सुवर्णनिर्माल्यमभूत् स्रगादिवत् ।
भूपस्य मानेऽप्यपमानचिन्तनं शालेर्महाश्चर्यकरं चतुष्टयम् ॥ ४ ॥

श्रीवस्तुपालस्य चाणहिल्लपत्तनादि५४स्थानेषु पृथक् पृथक् षट्पञ्चाशत्कोटिद्रव्योपरि ५४मुङ्गलवादम-

जानि, तेन च धर्मस्थानव्ययेन सा लक्ष्मीः सफलीकृता। यथा--१८कोटि ३९लक्षनव्यटङ्ककव्ययः श्रीशत्रुञ्जये कृतः। १८कोटि ८३लक्षाणि रैवते, १२कोटि ५३लक्षाणि अर्बुदे, इत्यादिसर्वोऽप्येवं२९शतकोटि७३कोटि ८० लक्ष २०सहस्र९०९३लोष्ठिकैरूनस्तस्य धर्मव्ययो ज्ञेयः। तथा मण्डपदुर्गे सं०पेथडदेसुतसं०झाञ्झणदेवस्य विवाहानन्तरं वध्वा श्रीजयसिंहदेवभूपोत्सङ्गमोचने राज्ञा स्वदेशप्रतिग्रामस्वर्णगद्याणकदानं दत्तम्। ततस्तस्याः प्रतिवर्षं १८लक्ष९२सहस्रग्रामगद्याणकैः ९४६मणप्रमाणं स्वर्णं मिलति स्म, नायकत्वं च, यथा--दधिस्थल्यादि-१२ग्रामाधिपत्रिभुवनपालाङ्गजेन श्रीकुमारपालनृपेण १८देशराज्यं प्राप्तम्॥ आनन्दश्च, यथा--रोहिणीराज्या स्वभर्त्रा सह गवाक्षस्थया पुरमध्ये रोदनं श्रुत्वा सदा शोकाभावेन तत्स्वरूपमजानन्त्या कोऽयं रागः? इति नृपपार्श्वे पृष्टम्। तेन तद्दर्शनाय स्वोत्सङ्गस्थसुतो भूमौ क्षिप्तः, पुण्यादेव तया पतन् पुत्रः कराभ्यां धृत्वा तदुत्सङ्गे मुक्तः॥ जयश्च--भरतकृष्णरामलक्ष्मणबाहुबल्यादीनाम्॥ वाञ्छितावाप्तिश्च--युग्मिनां सुरादीनां च॥ इति धर्मोपदेशः३॥

—॰*॰—

दिने दिने मञ्जुलमङ्गलावलीः सुसंपदः सौख्यपरम्परा च।
इष्टा च सिद्धिर्बहुला च बुद्धिः सर्वत्र सिद्धिः सृजतां सुधर्मम्॥ १॥

श्रीसर्वज्ञप्रणीतधर्मं सृजतां पुंसामेते पदार्थाः संपनीपद्यन्ते । कथमिति ?,

मङ्गलानि द्विधा लोके प्रोक्तानि मुनिपुङ्गवैः । सद्द्रव्यभावभेदाभ्यां तद्भावा बहवोऽत्र च ॥ २ ॥

दधिदूर्वाऽक्षतचन्दनवर्धापनबन्दिवृन्दजयवादाः । सर्वेभ्योऽभ्यधिकतरं मङ्गल्यं धर्म एव सर्वत्र ॥ ३ ॥

दधिमधुघृतदूर्वाचन्दनेन्दीवराणि ध्वजगजचमराश्च च्छत्रसिंहासनानि ।
कमलकलशवीणावेणुभृङ्गारहाराः श्रवणवचनवीक्षास्पर्शनैर्मङ्गलानि ॥ ४ ॥

दप्पणभद्दासणवद्धमाणसिरिवच्छमच्छवरकलसा । सत्थीनंदावत्ता कहिया इह अट्ठ मंगलया ॥५॥

देवपूजा गुरोः पूजा विवाहादिमहोत्सवाः । बन्दिनां जयवादाश्च भवन्ति कृतिनां गृहे ॥ ६ ॥

बालाण रवो तुरयाण हिंसणं बंदिविंदनिग्घोसो । गुरुओ मंथासद्दो धन्नाण घरे समुच्छलइ ॥ ७ ॥

एतानि द्रव्यमाङ्गलिकानि कृतपुण्यानां गृहे भवन्ति । यतः—

हस्तीन्द्रा मदभिन्नगल्लकरटास्तिष्ठन्ति निद्रालसा द्वारे हेमविभूषिताश्च तुरगा हेषन्ति यद् दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपणवैः सुप्तश्च यो बोध्यते तत्सर्वं सुरलोकभूतिसदृशं पुण्यस्य विस्फूर्जितम् ॥ ८ ॥

दृष्टान्ताः श्रीशान्तिनाथचक्रवर्त्यादीनाम् ।

जिणभत्ती गुरुविणओ छव्विहआवस्सयम्मि सज्झाओ । दाणं शीलं च तवो सब्भावण भावमंगलयं ॥९॥

भावधर्ममङ्गलाराधने फलं यथा——

धम्मो मंगलमुक्किट्ठं अहिंसा संजमो तवो । देवा वि तं नमंसंति जस्स धम्मे सया मणो ॥ १० ॥

दृष्टान्तो यथा--धम्मिल्लादीनां सुसंपदः।

सत्स्वामी सन्मित्रं सद्बन्धुः सत्सुतः सत्कलत्रम्। सत्सुजनः सद्भृत्यो धर्मादन्यदपि सत् सर्वम् ॥११॥

धण धन्नं च सुवन्नं रुप्पं कुवियं तहेव खित्तं च । वच्छं दुपयं चउप्पयं च बाहिरिया संपया नवहा ॥१२॥

कित्ती जसो सुअत्थो गुणा सुमित्तं कला य विन्नाणं । ईसरियं च महत्तं पयाव दसहा य अवराओ ॥१३॥

दृष्टान्तो विक्रमार्कस्य पुण्याद् राज्यप्राप्तिः, ह्निसुवर्णपुरुषप्राप्तिः, भट्टमात्रदत्तश्रेष्ठिप्रमुखाः सुहृदः, अग्निवेतालादयः सद्भृत्याः, दानगुणजा आचन्द्रार्कं कीर्तिः ॥ तथा सौख्यपरम्परा च--

भोजनं सूक्ष्मवस्त्राणि ताम्बूलं सौधसंस्थितिः । पल्यङ्कं मर्दनं स्नानं कर्पूरं कुसुमानि च ॥ १४ ॥

भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः । विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥१५॥ (युग्मम्)

वरबालामुहकमलं बालमुहं धूलिधूसरच्छायं । सामिमुहं सुपसन्नं तिन्नि वि सग्गं विसेसन्ति ॥ १६ ॥

अंकुर ॥ १७ ॥

कुंकुम कज्जल केवडउ कंकण कूर कपूर । कामिणि कंचण कप्पडा ए पुण्णह अंकुर ॥ १८ ॥

तथा इष्टार्थसिद्धिः—

यात्रापदप्रतिष्ठासाधर्मिकवत्सलानि च विवाहाः । इष्टार्थसिद्धयः सर्वाः संपद्यन्ते सुधर्मतः ॥ १९ ॥

यतः—अर्जयति व्यवसाये क्षेत्रे पच्येत जयति युद्धे । रोगादेरवति सदा धर्मोऽभीष्टार्थसिद्ध्यै स्यात् ॥२०॥

पुण्यादेव समीहितार्थघटना नो पौरुषात् प्राणिनां यद् भानोर्भ्रमतोऽपि नाऽम्बरतले जातस्तुरङ्गोऽष्टमः । स्वस्थानात् पदमेकमप्यचलतो वन्ध्यस्य चानेकशो जायन्ते मधुपालिपालितयशःश्रीलम्भिनः कुम्भिनः ॥२१॥

दृष्टान्तो यथा—उद्यमं कुर्वतां पुंसां भाग्यं सर्वत्र कारणम् । समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम् ॥२२॥

लौकिकी कथा ॥ पुण्याभावे मनोरथभङ्ग एव स्यात् । यतः—

वनकुसुमं कृपणश्रीः कूपच्छाया सुरङ्गधूली च । तत्रैव यान्ति विलयं मनोरथाः पुण्यहीनानाम् ॥ २३ ॥

कच्छपः कुरुते वाञ्छां यदि स्यात् कर्दमो गुडः । मण्डकाः पद्मिनीपत्राण्यम्भो राज्यं तदाऽस्म्यहम् ॥२३॥

निष्पुण्यकच्छपमनोरथकथावदभाग्यशेखरप्राप्तसक्तुनाशकथा ॥

तथा बहुला बुद्धिः-औत्पातिकी वैनयिकी कार्मिकी पारिणामिकी । चतुर्धा बुद्धयः प्रोक्ता धन्यानां सुकृताश्रिताः॥

मं०अभयकुमार-रोहक-दूतडामर-वज्रस्वाम्यादीनां दृष्टान्ता वाच्याः । यथा--अभयकुमारमन्त्रिणा कूपकण्ठस्थितानां पञ्चशतमन्त्रिणामग्रे भणितम्--

डाहिम लोकह विनडवा डाहिम खावा रज्ज । तिणि डाहिम्मिहिं किम सरइ सामी केरूँ कज्ज ? ॥२५॥
कइ करि पहिरहु मूंदडी कइ ऊठी घरि जाउ । वरसहं वांटउ बारमउ लोकहं तणउ मखाउ ॥ २६ ॥

तथा सर्वत्र सिद्धिः पुण्यादेव । यतः--

विद्याविज्ञानसद्धर्मनृपसेवाधनार्जने । यत्रोद्यमं कृती कुर्यात् तत्र तत्रेष्टसिद्धयः ॥ २७ ॥

॥ इति धर्मोपदेशः ४॥

---

पुंसां शिरोमणीयन्ते धर्मार्जनपरा नराः । आश्रीयन्ते च संपद्भिर्लताभिरिव पादपाः ॥१॥

आभरणानि दशधा । तद्यथा--

अङ्गुलिमुद्दा नूवर मेहल करकडग बहिरसा हारा । कण्ठाहरणं तिलयं कुण्डलजुअलं तओ मउडो ॥२॥

अथ एते पुरुषाः पुण्यार्जनपराः पुंसां पुरुषाणां शिरोमणितां गताः विश्वश्लाघनीयतया श्रूयन्ते । तद्यथा--

साधुश्रीसारंगो मुहणसिंहश्च समरराजश्च । सुरगिर्यां गजसिंहो मण्डपदुर्गे च पेथडः साधुः ॥ ३ ॥
श्रीवस्तुपालविमलौ जावडिनामा च बाहडो मन्त्री । नरपतिकुमारपालो गोपगिरौ बप्पभट्टिनृपआमौ॥४॥
संप्रतिभरतप्रमुखा नरपतयोऽन्येऽपि केऽपि वृषभाद्याः । सुकृताद्भुतकृतकृत्या जयन्ति विश्वैककोटीराः॥५॥

यथा एते तथाऽपरेऽपि सुकृतवन्तः शिरोमणितां गच्छन्ति, तथा आश्रीयन्ते च० जिम वर्षाकालिं महावृक्ष वल्लीवितानइ करी आश्रीइ, जिम दक्षिणावर्त्त शंखतणी श्रेणिकरी आ०, जिम वसंत ऋतु विविध वनस्पतीपुष्पप्रकरिं करी आ०, जिम सफल सहकार कोकिलइ करी आ०, जिम परिमलबहुल कमल मधुकरनिकरइ करी आ०, जिम लवणसमुद्र गंगायमुनाप्रमुख१४सहस्रमहानदी करी आ०, जिम वयरागर हीरे करी आ०, जिम चक्रवर्ती३२सहस्रमुकुटबद्धनरेश्वरिं करी आ०, जिम चन्द्रमा ग्रहगण तारा नक्षत्रे करी आ०, जिम इन्द्रमहाराजा देवदेवीनइ परिवारिं करी आ०, जिम गौतमस्वामी मुनिवरकरी आश्रीइ, तिम सुकृतवन्त पुरुष मान महत्त्व प्रतिष्ठा सिद्धि बुद्धि रिद्धि समृद्धि ऐश्वर्य गरूआडि धन धान्य यशः कीर्त्ति पुत्र पौत्र सन्तान प्रमुख प्रवर संपद श्रेणिं करी आश्रीइ । तो एह भणी तुह्मे भाग्यवन्त जाण उत्तम छो, अनेक प्रकारइ दान शील तपो भावना पूजा जिनशासनप्रभावना प्रमुख पुण्य करणीय करोछो, तिम हवइ करिवां, जिम श्रीसर्वज्ञतणे प्रसादिं उत्तरोत्तर मङ्ग-

लीक माला पामो ॥ अयं विशेषकरणीयकृतामुपदेशः ५ ॥

लज्जातो भयतो वितर्कवशतो मात्सर्यतः स्नेहतो लोभादेव हठाभिमानविनयश्रृङ्गारकीर्त्यादितः ।
दुःखात् कौतुकविस्मयव्यवहृतेर्भावात् कुलाचारतो वैराग्याच्च भजन्ति धर्ममसमं तेषाममेयं फलम् ॥१॥

लज्जायाम्, अर्धमण्डितनागिलामुक्तभवदेवभ्रातृभवदत्तवत् ॥ भये--मेतार्यहन्तृसुवर्णकारवत्, देवकृतभय-प्रवर्जितमेतार्यवद् वा ॥ वितर्के, चण्डरुद्राचार्यशिष्यवद् द्वयोरपि केवलज्ञानम्--

केइ सुसीला सुहमा य सज्जना गुरुजणस्स वि सुसीसा । विउलं जणंति सुद्धिं जह सीसो चण्डरुद्दस्स॥२॥

भार्याहसितधन्यवद्, वेश्याप्रोक्त--" अद्य दशमा यूयम् " इति वचसा प्रबुद्धनन्दिषेणवद् वा--

दस दस दिवसे दिवसे धम्मे बोहइ अह व अहिइरे। इय नन्दिसेणसत्ती तहविय से संजमविवर्ती॥३॥

मात्सर्ये, स्थूलभद्रोपरि मत्सरिसिंहगुहासाधुवत् । स्नेहे, अर्हन्नकयतिमातृवत्, श्रीस्थूलभद्रानुजमं॰सिरीआवद् वा ॥ लोभे, श्रीसुहस्तिप्रतिबोधितद्रम्मकवत्--

कोसंबीए जेणंदमग्गो पव्वाविओ जो जाओ । उज्जेणीए संपइराया सो नंदउ सुहत्थी ॥ ४ ॥

त्रिखण्डाधिपत्याऽऽप्तिसपादलक्षजैनप्रासादसपादकोटीजिनबिम्बनिर्मापणाद्यवदातसुभगं श्रीसंप्रातिनृपचरित्रं

वाच्यम् ॥ हठे, बाहुबलिवत्—

धम्मो मएण हुंतो तो नवसीउह्लवाय विब्भडिओ । संवच्छर मणसीओ बाहुबली तह किलिस्सन्तो ॥५॥

अभिमाने, दशार्णभद्रनृपवत्–

दशार्णभद्रादपरो न मानी श्रीशान्तिनाथादपरो न दानी। श्रीशालिभद्रादपरो न भोगी श्रीस्थूलभद्रादपरो न योगी॥६॥

चउसट्ठि करिसहस्सा चउसट्ठि सं अट्ठदन्त अट्ठसिरा । दंते अ एगमेगे पुक्खरणीओ अ अट्ठट्ठ ॥७॥

इत्यादिपुरन्दरऋद्धिं दृष्ट्वा श्रीदशार्णभद्रराजेन्द्रः श्रीवीरपार्श्वे प्रव्रजितः; सुरेन्द्रः पादे पतितो जितं त्वया मया हारितमित्युक्त्वा । यतः–

एगदिवसं पि जीवो पवज्जमुआगओ अनन्नमणो । जइ वि न पावइ मुक्खं अवस्स वेमाणिओ होइ ॥८॥

देवदाणवगंधव्वा जक्खरक्खसकिंन्नरा । बंभयारिं नमंसन्ति दुक्करं जं करंति ते ॥ ९ ॥

तथाऽहङ्कारे सत्यप्रतिज्ञे श्रीगौतमस्वामिप्रमुख४४शतद्विजदीक्षासंबन्धा वाच्याः । श्रीसिद्धसेनदिवाकरस्य वृद्धवादिकृतः–

नवि मारीइ नवि चोरीइ परदारा गमण निवारीइ । थोवा थोवुं दाईइ इम टगमगि सरगि जाईइ ॥१०॥

इत्यादि५शतदुग्धघटश्रवणाद् निरहङ्कारत्वेन प्रतिबोधः ॥ याकिनीमहत्तरासूनुश्रीहरिभद्रसूरिप्रबन्धो वाच्यः ॥

शालिभद्रोऽपि मेऽधीशः स्थूलभद्रः पितुर्मृतौ । विरक्तः कार्त्तिको दूनो मेतार्यस्तु विगोपितः ॥ ११ ॥
न करन्ति जे तवं संजमं च ते तुल्लपाणिपायाणं । पुरिसासमपुरिसाणं अवस्स पेसत्तणमुवेइ ॥१२॥

इत्याद्यभिमानतः शालेः प्रतिबोधः ॥ विनये, नमिविनमिसेवकयोः--इह लोके विद्याधरपदवी वैताढ्यपर्वताधिपत्यप्राप्तिः, परलोके तु मोक्षाऽवाप्तिः ।

मुणिणो वि तुहल्लीणा नमिविनमी खेयराहिवा जाया । गुरुआण चलणसेवा न निप्फला होइ कईआ वि ॥१३॥
नमिविनमी खयरिन्दा सिद्धा कोडीहिं दोहिं साहूणं । जिहिं जाया जयउ तवं सिरीसित्तुंजयमहातित्थं ॥१४॥

तथा श्रीवीरसेवकपुष्पशालवत् ॥ श्रृंगारे, ब्रह्मदत्तचक्रिपूर्वभवचण्डालभ्रातृयुगवत् ॥ कीर्तिविषये, आभीरवत्॥ आदिशब्दाद् विद्याध्ययनार्थं सोमदेवसुतार्यरक्षिताचार्यवत् ॥ दुःखे, अन्यतीर्थिकतापसपराभूतकार्त्तिकश्रेष्ठिवत् ॥ कौतुके, श्रीगौतमप्रतिबोधित १५०३ तापसवत् प्रतिबोधः केवलज्ञानं च--

कोडिन्नदिन्नसेवालनामए पञ्चपञ्चसयकलिए । पडिबुद्धे गोअमदंसणेण पणमामि सिद्धेअ ॥ १५ ॥

विस्मये, इलापुत्रवत्--

अभिरूढो वंसग्गे मुणिपवरे दट्ठु केवलं पत्तो । जोगिह वेसधरो वि हु तमिलापुत्तं नमंसामि ॥ १६ ॥

व्यवहृतौ, अभयकुमाराऽऽर्द्रकुमारवत् ॥ भावे, भरतचक्रिवत्, चन्द्रावतंसकवद् वा । यथा—

जोनिच्छएण गिह्नइ देवच्चाए विनयधियं सुवइ । सो साहेइ सकज्जं जह चन्दवडिंसओ राया ॥ १७ ॥

कुलाचारे, सूर्यवंशीयपलितदर्शनानन्तरं दीक्षाग्राहिकीर्तिधरसुकोसलवत् ॥ वैराग्ये, जम्बूस्वामिधनगिरि-वज्रस्वामिप्रसन्नचन्द्रचिलातीपुत्रादयो दृष्टान्ताः ॥ क्षमायाम्, गजसुकुमालकूरगड्डुकश्रीवीरपार्श्वस्कन्दकाचार्यादीनां दृष्टान्ता वाच्याः ॥ शीले, सुदर्शन-श्रीमल्लि-नेमि-स्थूलभद्र-सीता-द्रौपदी-राजीमतीदृष्टान्ताः ॥ सम्यक्त्वे, श्रेणिक-नारायण-विक्रमदृष्टान्ताः ॥ प्रभावकत्वे, श्रीहेमाचार्य-कालिकाचार्य-जीवदेवसूरि-जिनप्रभसूरि-विष्णुकुमार-श्रीयशोदेवसूरि-आर्यखर्पट-श्रीबप्पभट्टिसूरि-पादलिप्तसूरि-श्रीधर्मघोषसूरि-मानदेवसूरि-मानतुङ्गसूरि-बोहादीनां दृष्टान्ता वाच्याः ॥ किं बहुना ?, धर्मः सर्वप्रकारैः कृतो महालाभाय भवति । यतः—

धर्मः श्रुतोऽपि दृष्टोऽपि कृतो वा कारितोऽपि वा । अनुमोदितोऽपि राजेन्द्र ! पुनात्यासप्तमं कुलम् ॥१८॥

॥ इति धर्मोपदेशः ६ ॥

फलं च पुष्पं सुतरुस्तनोति वित्तं च तेजश्च नृपप्रसादः ।
ऋद्धिं प्रसिद्धिं तनुते सुपुत्रो भुक्तिं च मुक्तिं च जिनेन्द्रधर्मः ॥ १ ॥

यथा--सुवृक्षाः सहकारदाडिमादयः पुष्पफलशालिनो जगदाह्लादका भवन्ति । यतः——
मञ्जरिभिः पिकनिकरं रजोभिरलिनं फलैश्च पान्थगणम् । मार्गसहकार! संततमुपकुर्वन् नन्द चिरकालम् ॥२॥

जातीचम्पकादयः सुवृक्षा विफलत्वेन न विश्वाह्लादकाः, यतः--चम्पकः--
जिहिं परिमल तिहिं तुच्छदल जिहिं दल तिहिं नवि गन्ध। रे चंपय! तुह तिन्नि गुण सदल सुरूव सुगन्ध ॥३॥

इत्यादिगुणवानपि भ्रमरैर्निष्फलत्वेन परित्यज्यते । यदुक्तम्--भावशतके--
काचित् कान्ता रमणवसतौ प्रेषयन्ती करण्डं प्रेयोवस्त्राकलितमलिखद् व्यालमस्योपरिष्टात् ।
गौरीनाथं झगिति चकिता चम्पकं चात्र भावं पृच्छत्यार्यान् विपुलधिषणो मल्लिनाथः कवीन्द्रः ॥४॥

वसन्तविलासेऽपि--
अलियुग! चरण न चांपए चापए अति हि सुगन्ध। रूडए दोहग लागए आगए एह निबन्ध ॥५॥

यथा नरेन्द्रप्रसादः लक्ष्मी प्रतापं च दत्ते । यतः——

इक्षुक्षेत्रं समुद्रश्च यानं पाषाण एव च । प्रसादो भूभुजां घ्नन्ति क्षणादेव दरिद्रताम् ॥ ६ ॥

दृष्टान्ता मं०उदयन--वाग्भट--मं०करीर--वस्तुपाल--तेजपाल--झांझणदेप्रभृतीनां वाच्याः । यथा सुपुत्रः पूर्वजानां स्वकुलस्य च ऋद्धिं ख्यातिं च प्रकुरुते । यतः--

शर्वरीदीपकश्चन्द्रः प्रभाते रविर्दीपकः । त्रैलोक्यदीपको धर्मः सुपुत्रः कुलदीपकः ॥ ७ ॥

सौरभाय भवन्त्येके चन्दना इव नन्दनाः । कुलच्छित्त्यै भवन्त्येके वालका इव बालकाः ॥ ८ ॥

दृष्टान्तः--श्रीयुगादिदेवश्रीवर्धमानश्रीरामादीनाम् ॥ तथा श्रीजिनधर्मो भव्यानां भुक्तिं राज्यऋद्धिपरिवारादिकाम्, परलोके मुक्तिं च ददाति; दृष्टान्ताः पाण्डवसगरादीनां वाच्याः ॥ इति धर्मोपदेशः ७ ॥

---

राज्ञः प्रसादो दिव्यास्त्रं वाणिज्यं हस्तिरत्नयोः । जैनधर्मस्तथैकोऽपि महालाभाय जायते ॥ १ ॥

यथा राजप्रसादस्तीर्थोद्धारयात्रादिदुस्साध्यकार्यसाधकत्वेन महालाभदो भवति । यतः——

कइ प्रभु थईइ अप्पणै कै प्रभु कीजै हच्छि । कज्ज करे वामाण सह बीजो मग्ग न अच्छि ॥२॥

सुप्रसन्नवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः। तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति ॥३॥

नृपप्रसादकोपयोः फलम्, यथा--

ते गच्छन्ति महा-पदं भुवि परा--भूतिः समत्पद्यते तेषां, तैः समलं-कृतं निजकुलं तैरेव लब्धा क्षितिः।
तेषां द्वारि न-दन्ति-वाजिनिवहास्ते भूषिताः सर्वदा ये दृष्टाः परमेश्वरेण भवता तुष्टेन रुष्टेन वा ॥४॥

दृष्टान्तः--सा०समरा--सा०गोविन्दादिभिः स्वस्वनृपमानतः श्रीशत्रुञ्जयतारणदुर्गतीर्थबिम्बोद्धारः सुखेन कारितः। यथा--चक्ररत्नकर्करमहाशिलाहलमुशलवज्रादि दिव्यास्त्रं १२ चक्रि ९ वासुदेवबलदेवचेटकमहाराजकोणिकनृपकरकण्डूशिलादित्यपुण्याढ्यादीनां राज्यसमृद्धिदं बभूव । यथा--हस्तिरत्नव्यवसायाभ्यां श्रे०जावडिजनकभावडेन प्रवहणागतश्वेतगजप्रदानसंतुष्टविक्रमार्कप्रसादात् ४ग्रामसंयुक्तमधुमतीनगरीराज्यं लब्धम् । मेतार्यकृतपुण्यकाभ्यां रत्नदानतः श्रेणिकपुत्रीपाणिग्रहणं कृतम्। तथा विसा० आभडेन लब्धाऽजागले टोकरान्तरालबद्धमणिप्रदानतः पञ्चशतग्रामाधिपत्यं सपादकोटिद्रव्यं च श्रीजयसिंहप्रसादात् पत्तने प्राप्तम्; तथा श्रीजिनधर्मः सिद्धत्वादिमहालाभदो भवति । यतः--

द्युमणिस्पर्शपाषाणदक्षिणावर्त्तशङ्खवत्। कृष्णाचित्रकवल्लीवल्लाभदं जिनशासनम् ॥ ५ ॥

॥ इति धर्मोपदेशः ८॥

अतिनिर्मला विशाला सकलजनाऽऽनन्दकारिणी प्रवरा । कीर्तिर्विद्या लक्ष्मीर्धर्मेण विजृम्भते लोके ॥१॥

कीर्तिर्भाग्यलभ्या । यतः--

यस्य कीर्तिं जनो वक्ति न्यायधर्मे दृढा मतिः । अपवादाद् भयं यस्य पुरुषः पुरुषो हि सः ॥ २ ॥

यं प्रशंसन्ति राजानो यं प्रशंसन्ति सज्जनाः । गुरवो यं प्रशंसन्ति तमाहुः पुरुषोत्तमम् ॥ ३ ॥

यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः । यं प्रशंसन्ति बन्धुक्यस्तमाहुः पुरुषाधमम् ॥ ४ ॥

श्रीस्थूलभद्रस्य निर्मलब्रह्मव्रतपरिपालनजा कीर्तिः ८४जिनचतुर्विंशतिकावधिभाविनी । श्रीरामस्य ११लक्ष-वर्षभवनेऽपि न्यायजा कीर्तिरद्यापि नवीनैवाऽस्ति, रावणादीनां दुष्कीर्तिरपि । ब्रह्मेन्द्रस्य विंशतिसागरकोटीकाल-प्रमाणा रैवते श्रीनेमिबिम्बनिर्मापणजा जनैर्गीयते कीर्तिः । एवं श्रीयुगादिदेवादीनामपि वाच्या ॥

निर्मला विद्याऽपि पुण्यादेव भवति । यतः--

वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् ?। हृदयग्राहिणस्तासां द्वित्राः सन्ति, न सन्ति वा ॥५॥

श्रीबप्पभट्टिसूरीणां क्षुल्लकत्वे ७शतश्लोकाध्ययनप्रज्ञा, श्रीवज्रस्वामिना पालनकसुप्तेनैकादशाङ्गी पठिता, दुर्बलिकापुष्पमित्रस्य विद्याऽध्ययनध्यानेन सोहलकघृताऽऽहारग्रहणेऽपि दुर्बलत्वम्, श्रीसोमप्रभसूरीणां श्लोकगा-

थानां शतार्थप्रकटीकरणशक्तिः, देवसूरीणां वादलब्धिर्जगत्प्रसिद्धा, श्रीहेमसूरीणां लक्षणाऽद्यनेकशास्त्रकरण-श्रीकुमारपालप्रतिबोधनादिसामर्थ्यम्, मलयगिरिश्रीअभयदेवसूरिप्रभृतीनां सकलसिद्धान्तवृत्तिकरणशक्तिर्ध-र्मादेवासीत् । तथा--पुण्यानुसारिणी लक्ष्मीभोग्यता विषमकालादौ सकललोकोपयोगिनी स्यात् ।

यतः--मेहाण जलं चंदाण चंदिमा तरुवराण फलनिवहो । सप्पुरिसाण विढत्तं सामन्नं सयललोअस्स ॥६॥

अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ७ ॥

सा॰मुहणसिंहसाधुः सत्यवादी लोके प्रसिद्धः--सुरत्राणेन कूटमालापयितुं सभासमक्षं तव गृहे कियद् धन-मस्तीति पृष्टः । तेन स्वगृहाट्टदेशान्तरस्थवस्त्रवस्तुधनकणमूल्यलेखकं विलोक्य प्रोक्तम्--स्वामिन् ! मद्गृहे ८४-लक्षजीर्णटङ्काः सन्ति । तुष्टेन सुरत्राणेन १६लक्षार्पणेन कोटीश्वरः कृतः । तद्गृहे कोटिध्वजा सपरिवारसाधुपरि-धापनपूर्वं सुरत्राणेन स्वहस्तेन प्रौढोत्सवपूर्वं बद्धा । ततः सा लक्ष्मीः श्रीमुहणसिंहेन दानेन कृतार्थीकृता ॥

इति धर्मोपदेशः ९ ॥



नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ १ ॥

यादवेक्ष्वाकुव्यवहारिकुलेषूत्पत्तिः पुण्यादेव भवति । यतः--

राज्यं सुसंपदो भोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥ २ ॥

कुलोत्पत्तिरपि विभूत्या भ्राजते । यथा--श्रीराम उत्तमकुलजोऽपि वनवासे वसिष्ठेन स्वाश्रमे प्राप्तेऽपि निर्धनत्वाद् नालापितः। रावणजयं लङ्काधिपत्यं प्राप्य पश्चात्तदाश्रमे प्राप्तः, तेन संमुखोत्थानाऽऽसनदानादिना भृशं संमानितः। तदा रामेणोक्तम्--

स एव त्वं स एवाहं स एव च त्वदाऽऽश्रमः। पूर्वं नैवादरः कोऽपि साम्प्रतं केन हेतुना ? ॥ ३ ॥

वसिष्ठवचः--

स एव त्वं स एवाहं स एव च मदाऽऽश्रमः । पूर्वं तु निर्धनोऽभूस्त्वं सांप्रतं तु पुरन्दरः ॥ ४ ॥

धनमर्जय काकुत्स्थ ! धनमूलमिदं जगत् । अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ५ ॥

जिण दिण वित्त न अप्पणइ तिण दिणि मित्त न कोइ। सूरह कमलह मित्त पुण जल विणु वयरी सोइ ॥६॥

क्वापि ग्रामे घेघामेघाऽभिधौ द्वौ बान्धवौ वसतः स्म। घेघा धनी, मेघा निर्धनः। भगिन्या स्वपुत्रोद्वाहे भोज-

नार्थमाकारितौ। घेघस्य घृतादिकां भृशं भक्तिं करोति स्म, मेघस्य स्वल्पामेव। तदा स्वभाजनं शीर्षे चटाप्य नाट्यं कुर्वता मेघेनाभाणि--

गरथह गउरव नो नरह अवर म कारण जोइ। घेघा घलहल नामीइ मेघा टीप न होइ ॥ ७॥

एवं केनापि बान्धवेन स्वभगिनी पूर्वं निर्धनत्वादसंमानिता, पश्चात्सधनत्वात् भृशं भोजनाच्छादनादिना संमान्यमाना चाह--ना गला खींट लाओ जिमउ रे ! जिमओ ॥

तथा प्रियवस्त्वागमोऽपि पुण्यादेव। यतः--

श्रान्तस्य यानं तृषितस्य पानमन्नं क्षुधार्तस्य भये च रक्षा।
एतानि यस्योपनयन्ति काले तं लक्षणज्ञाः प्रवदन्ति धन्यम् ॥ ८ ॥

सौख्याप्तिः पुण्यादेव। यतः——

सरभससुरगणसहितः सुरयोषिज्जनितनृत्यसंगीतः। सुरलोके सुरनाथो भवति हि पुण्यानुभावेन ॥९॥

तथा--राजकुले मान्यता पुण्यात् प्राप्यते। यतः——

देवाण वरं सिद्धाण दरिसणं गुरुनरिन्दसम्माणं। गयभूमिनट्ठदव्वं पामिज्जइ पुन्नरेहाइ ॥ १० ॥

राजमान्यं धनाऽऽढ्यं च विद्यावन्तं तपस्विनम् । रणे शूरं च दातारं लघुं वृद्धतया विदुः ॥ ११ ॥

तथा विमलं यशः पुण्यैरेवाऽऽप्यते--

किची सा सलहिज्जइ जा सुणीइ अप्पणेहिं कन्नेहिं । पच्छा मुआण सुंदरि ! सा किची होउ मा होउ ॥१२॥

जस सहित जे नर हुआ रविपहिला ऊगंति । जोगा जाते दीहडे गिरिपत्थरा ढुलंति ॥१३॥

कीरतहन्दा कोटडा पाड्याहि न पडन्ति ॥

दृष्टान्ताः श्रीभोजकर्णादीनां वाच्याः ॥ इति धर्मोपदेशः १० ॥

---

धर्मो महामङ्गलमङ्गभाजां धर्मः पिता पूरितसर्वकामः । धर्मो जनन्युद्दलिताखिलार्तिर्धर्मः सुहृद् वर्धितनित्यहर्षः ॥१॥

इह जगति सर्वकार्यसाधकं महामङ्गलं श्रीजिनधर्मो भवति । यतः--

धम्मो मंगलमूलं ओसहमूलं च सव्वदुक्खाणं । धम्मो बलं च विउलं धम्मो ताणं च सरणं च ॥ २ ॥

सव्वे ताह पसत्था सुमिणा सउणा तहेव नक्खत्ता । तिहुअणमंगलनिलयं जस्स य हिययम्मि जिणधम्मं ॥ ३ ॥

सुभूमचक्रिणा दधिभोजनसपर्याणवराश्वसंमुखीकारणसधवकुलस्त्रीवर्धापनादीनि बाह्यमङ्गलानि धात-

कीखण्डविजययात्राऽवसरे कारितान्यपि समुद्रब्रुडनावसरे धर्ममङ्गलाभावाद् विफलान्येव जातानि। एवं कोणि-कस्यापि कृत्रिमाश्वगजदण्डचक्ररत्नादीनि चक्रि१४रत्नानि धर्माभावाद् मरणाय जातानि; अतः सर्वत्र चन्द्र-बलताराबलग्रहबलदुर्गबलबाहुबलादिभ्यो बलवत्तरं धर्मबलं विलोक्यते । यतः--

तावच्चन्द्रबलं ततो ग्रहबलं ताराबलं भूबलं०॥४॥ हस्ती स्थूलवपुः स चाङ्कुशतनुः किं हस्तिमात्रोऽङ्कुशः?॥५॥

सव्वं बलं धम्मबलं जिणाइ सव्वा कहा धम्मकहा जिणाइ ।
सव्वा कला धम्मकला जिणाइ सव्वं सुहं मुत्तिसुहं जिणाइ ॥ ४ ॥

बावत्तरिकुलकलुसा पंडिअपुरिसा अपंडिआ चेव । सव्वकलाणं पवरं जे धम्मकलं न याणंति ॥ ५ ॥

तथा धर्मः पितृवत् सर्वप्रकारहितकारकः स्यात् । यथा--श्रेणिकस्य जनकापमानितस्य बेन्नातटे धर्मप्र-सादात् पाणिग्रहणराजमान्यताऽऽद्यनेकमनोवाञ्छितानि जातानि । यतः--

केऽपि सहस्रंभरयो लक्षंभरयश्च केऽपि केऽपि नराः । नात्मम्भरयः केचित् फलमेतत्सुकृतदुष्कृतयोः ॥६॥

एगे दोघट्टघडा रहेसु जं पाणवाहणारूढा । वच्चंति सुकयपुन्ना अन्ने धावंति से पुरओ ॥ ७ ॥

तथा धर्मो मातृवत् रोगवियोगादिपीडां दलयति । यतः--

सुकृतमेव बुधैरमृतं मतं तदितरद् विषमं विषमुच्यते ।
सुकृतिनो विलसन्ति सदा मुदा तदितरे विविधाऽऽपदमाश्रिताः ॥ ८ ॥

यथा नमिराजर्षेः——बहूनां कलहो नित्यं द्वयोः संघर्षणं भवेत् । एकाकी विचरिष्यामि कुमारीवलयं यथा ॥९॥

इत्यादिशुभध्यानप्रव्रज्याग्रहणमनोरथवतो दाघज्वरोपशमः । तथा धर्मो मित्रवद् नित्यं हर्षं करोति ।

यतः--नित्यमित्रसमं देहं स्वजनाः पर्वसन्निभाः । नमस्कारसमो धर्मस्तस्माद् धर्मं समाचरेत् ॥ १० ॥

धर्मतः सकलमङ्गलावली धर्मतः सकलशर्मसंपदः । धर्मतः स्फुरति निर्मलं यशो धर्म एव तदहो! विधीयताम् ॥११॥

श्रीजिनधर्मस्य निरुपमानस्यापरोपमानाभावात् पित्रादीन्युपमानानि यानि दत्तानि सन्ति तानि वनेचरदृष्टान्तेन ज्ञातव्यानि । यथा--अश्वाहृतनरवाहननृपः केनचिद् वनेचरेण शीतलजलस्वादुफलोपढौकनेन संतोषितः; पश्चात् स्वसैन्यमिलने राज्ञा भिल्लः सार्धमाकारितः स्वावासासन्नसौधे स्थापितः पट्टकूलतुरङ्गमोदकादिनानाविधवस्तुप्रदानेनावर्जितः; कियद्वर्षानन्तरं स्वकुलमिलनार्थमेकाकी वने प्राप्तः, सज्जना मिलिताः, तेषामग्रे स्वभोजनादिवार्ता करोति स्म । तैरभाणि--अश्वाः कीदृशाः ?। तेन तत्रोपमानाभावादुक्तम्--हरिणरोझोपमाना अश्वाः; कपित्थफलोपमाना मोदकाः, कन्दरासमा आवासाः, भूर्जपत्रसमानानि पट्टकूलानि, ताड-

पत्राभरणोपमानि रत्नसुवर्णाभरणानि । ततः स्वकुलं नगरे समानीतम् ॥ इति धर्मोपदेशः ११ ॥

---

बुद्धेः फलं तत्त्वविचारणं च देहस्य सारं व्रतधारणं च ।
अर्थस्य सारं किल पात्रदानं वाचः फलं प्रीतिकरं नराणाम् ॥ १ ॥

भाग्येन प्रासानामेषां चतुर्णां विवेकिना फलं ग्राह्यं बुद्धेः । यथा--

षट्पदः पुष्पमध्यस्थं यथा सारं समुद्धरेत् । तथा सर्वेषु कार्येषु सारं गृह्णाति बुद्धिमान् ॥ २ ॥

देहसारं यथा--

अथिरेण थिरो समलेण निम्मलो परवसेण साहीणो। देहेण जइ विढप्पइ धम्मो ता किं न पज्जत्तं ?॥ ३ ॥

दानं वित्ताद् ऋतं वाचः कीर्त्तिधर्मौ तथायुषः । परोपकरणं कायादसारात् सारमुद्धरेत् ॥ ४ ॥

क्षेत्रं रक्षाति चञ्चा सौधं लोलत्पटी कणान् रक्षा । दन्तात्ततृणं प्राणान् नरेण किं निरुपकारेण ?॥५॥

कस्तूरी पृषतां रदाः करटिनां कृत्तिः पशूनां पयो धेनूनां छदमण्डलानि शिखिनां रोमाण्यवीनामपि ।
पुच्छस्नायुवसाविषाणनखरस्वेदादिकं किंचन स्यात्कस्याप्युपकारि मर्त्यवपुषो नामुष्य किञ्चित् पुनः ॥६॥

दृष्टान्तो मेतार्यादीनाम् ।

निप्फेडिआणि दुन्नवि सीसावेढेण जस्स अच्छीणि । न हु संजमाउ चलिओ मेअज्जो मंदरगिरिव्व ॥७॥

अर्थसारं पात्रदानम्। दृष्टान्तः कर्णस्य--

चलं चित्तं चलं वित्तं चलं जीवितमावयोः । प्रसारय करं विप्र ! धर्मस्य त्वरिता गतिः ॥ ८ ॥

कुभोजनैर्दिनं नष्टं कुस्त्रिया यौवनं गतम् । कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥ ९ ॥

यद् यदस्तमिते सूर्ये न दत्तं धनमार्थिनाम् । तदहं नैव जानामि प्रातः कस्य भविष्यति ? ॥ १० ॥

वाचः फलं यथा--

न तथा शशी न सलिलं न चन्दनरसो न शीतलच्छाया। आह्लादयन्ति पुरुषं यथा हि मधुराक्षरा वाणी ॥११॥

जं पिज्जइ पियवयणं किज्जइ विणओ अ दिज्जए दाणं । परगुणगहणं किज्जइ अमूलमंतं वसीकरणं ॥१२॥

अवगुण झंपइ गुण चवइ न चवइ निट्ठुर वाणि । सुगुण सुमाण सदेव गुणि देवह हुंति कि खाणि ॥१३॥

यथा--श्रीभोजेन राजपाटिकां कृत्वा पश्चाद् वलमानेन संकीर्णमार्गे संमुखागतः कश्चिदन्धोऽग्रसैन्यैर्निर्भर्त्स्यमानो दृष्टः, मातुल! भवतामस्ति सौख्यमित्यालापितः। ततस्तेनोक्तम्--भोज ! अतः परं त्वत्प्रसादाद् भवि-

ष्यति । राज्ञोक्तम्--कथं ज्ञायते भोजः ?। तेनोक्तम्--मधुरवाण्या । तुष्टेन राज्ञा स्वराजवाहनं १२ग्रामाधिपत्यं दत्तम् ॥ इति धर्मोपदेशः १२ ॥

उपदेशतरङ्गिण्यां पञ्चमोऽभूत्तरङ्गकः । धर्मोपदेशनामाऽयं रत्नमन्दिरनिर्मितः ॥ १ ॥

**इति श्रीतपागच्छाधिनायकश्रीसोमसुन्दरसूरिशिष्यश्रीरत्नशेखरसूरिपं०नन्दिरत्नगणिशिष्य--रत्नमन्दिरगणिगुम्फितायामुपदेशतरङ्गिण्यां धर्मोपदेशरूपः पञ्चमस्तरङ्गः समाप्तः ।**

त्रयस्त्रिंशच्छतान्यत्र ३३००श्लोकसंख्या प्रकीर्त्तिता । उपदेशतरङ्गिण्यां समग्राक्षरमेलने ॥ २ ॥



# उपदेशतरङ्गिण्यन्तर्गतानां पद्यानामकाराद्यनुक्रमणिका ।

—०—

३

४

—०—



## उपदेशतरङ्गिण्याः शुद्धिपत्रम् ।

| पङ्क्तिः | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| ९ | चतुरचाणाक्यचकोरः | चतुरचाणक्यचकोरः |
| २ | नलिनगुम्ममञ्ञयर्ण | नलिनगुम्ममज्झयर्णं |
| ३ | सप्तशतसत्रकारान् | सप्तशतसत्रागारान् |
| १० | पुनरपि सुलभमम्भो | पुनरपि सुलम्भमम्भो |
| ३ | -पुत्रादिसूरिविरुदवृन्दं | -पुत्रादि सूरिविरुदवृन्दं |
| ८ | क कं | कं कं |
| २ | ह्वचणेण | न्हवणेण |
| ४ | प्रातपचन्द्रं | प्रतिपचन्द्रं |
| ९ | नृपातिक्रयाणकं | नृपतिः क्रयाणकं |
| २ | समत्पद्यते | समुत्पद्यते |
| ७ | वावत्तरिकुलकलसा | वावत्तरिकलकुसला |
| १ | ग्रामाधिपत्यं | ग्रामाधिपत्यं च |

## अनुक्रमणिकायाः शुद्धिपत्रम् ।

| पृ. | पं. | अशु० | शुद्ध० |
|---|---|---|---|
| ३ | ४ | ० | २६१–१२ औत्पातिकी चैन- |
| ७ | ७ | तार्क्ष्येणेव फणाभृतो | ० |
| ९ | ८ | न ज्वलत्यनिल- | न ज्वलत्यनल- |
| ९ | ३ | नाशाम्बरत्वे न दिगम्बरत्वे | नाशाम्बरत्वे न सिताम्बरत्वे |
| १० | ४ | पुरुसेहिं- | पुरिसेहिं- |
| १२ | १२ | ० | २३७–११ मृत्योर्बिभेषि किं |
| १३ | १३ | यस्याष्टौ संपदश्चातु | ० |
| १४ | ५ | लज्जातो भवतो | लज्जातो भयतो |
| १७ | ९ | सुप्रसन्नवदनस्स्य | सुप्रसन्नवदनस्य |

